सर्वं युगपत्प्रविलापयन् तद्विलक्षणं ब्रह्म प्रतिपद्येतेति। तथा च वक्ष्यति। पादा मात्रा मात्राश्च पादा इति। तदाह। सर्वं ह्येतद्ब्रह्मेति। सर्वं यदुक्तमोङ्कारमात्रमिति तदेतद्ब्रह्म तच्च ब्रह्म परोक्षाभिहितं प्रत्यक्षतो

---

स्वतोऽप्युपदेशवशादधिगन्तव्यमित्यर्थः। वैतथ्यप्रकरणस्यावान्तरविषयविशेषं दर्शयति। यस्येति। आरोपितनिषेधे सत्यनारोपितप्रतिपत्तिः स्वाभाविकीत्यत्र दृष्टान्तमाह। रज्ज्वामिवेति। हेतुतो द्वैतस्य वितथत्वादियुक्तिवशादित्यर्थः। अद्वैतप्रकरणस्यार्थविशेषमुपन्यस्यति। तथाऽद्वैतस्यापीति। तस्यापि द्वैतवद्धेतुवशादनुपपत्तेर्मिथ्यात्वप्रसङ्गप्राप्ते। तस्यां प्रत्याभौपाधिकभेदाद्यवस्थायाः स्वस्थत्वादव्यभिचारादियुक्तिवशादद्वैतस्य परमार्थत्वं प्रतिपादयितुं तृतीयं प्रकरणमित्यर्थः। अलातशान्तिप्रकरणस्यार्थविशेषं कथयति। अद्वैतस्येति। तस्य यथात्मशास्त्राभिमतत्वेन वस्तुत्वं तत्प्रतिपक्षत्वं पक्षान्तराणामित्यत्र हेतुमाह। अवैदिकानीति। तेषां निराकार्यत्वे हेतुमाह। अतथार्थत्वेनेति। मिथ्याद्वैतनिष्ठत्वेनेत्यर्थः। तदुपपत्तिभिरेव निराकरणे हेतुमाह। अन्योन्येति। पक्षान्तरप्रतिषेधमुखेनाद्वैतमेव द्रढयितुमलातप्रकरणमित्यर्थः। ओङ्कारनिर्णयद्वारेणात्मप्रतिपत्त्युपायभूतमाद्यं प्रकरणमित्युक्तम्। नहि निर्णयस्य तद्धेतुत्वायोगात्। न ह्यर्थान्तरज्ञानमर्थान्तरज्ञाने व्याप्तिमन्तरेणोपयुज्यते। न चात्र धूमाग्न्योरिव व्याप्तिरुपलभ्यते। न चात्मकार्यत्वमोङ्कारस्य युक्तम्। आकाशादेरविशेषात्। तस्य च सर्वात्मत्वेनात्मवत्तत्कार्यत्वस्याघातादिति मन्वानः सन् प्रथमप्रकरणार्थं प्रागुक्तमाक्षिपति। कथमिति। न वयमनुमानाघटादोङ्कारनिर्णयमात्मप्रतिपत्त्युपायमभ्युपगच्छामो येन व्याप्त्यभावो दोषमावहेत्। किन्तु श्रुतिप्रामाण्यात्तन्निर्णयस्तद्धेतुरिति परिहरति। उच्यत इति। तत्र श्रुत्या नचिकेतसं प्रति ओमित्येतदित्यनेन वाक्येन ब्रह्मत्वेनोमित्येतदुपदिष्टम्। समाहितेनोङ्कारोच्चारणे यच्चैतन्यं स्फुरति [illegible] उपलभ्यते। तेन

भाति। अयमात्मेति। सोऽयमात्मा ओङ्काराभिधेयः परापरत्वेन व्यवस्थितश्चतुष्पात्कार्षापणवन्न गौरिवेति

---

प्राग्भावात्सदद्वयमिति नेत्याह। स चेति। आत्मवाचकत्वेऽपि नास्योङ्कारस्यात्ममात्रत्वं तद्वाचकस्य तन्मात्रत्वमिति व्याप्त्यभावात्। प्राणादेरात्मविकल्पस्याभिधानव्यतिरेकेऽदर्शनादित्याशङ्क्याह। ओंकारेति। तस्य विकारः सर्वो वाग्विशेषः। अकारो वै सर्वा वागिति श्रुतेः। ओङ्कारस्य च तत्प्रधानत्वात्तेन प्राणादिशब्देन वाच्यः प्राणादिरात्मविकल्पः सर्वः स्वाभिधानव्यतिरेकेण नास्ति। तदभिधानं प्राणादिशब्दविशेषात्मकमोङ्कारविकारभूतमोङ्कारातिरेकेण न सम्भवतीत्योङ्कारमात्रं सर्वमिति निश्चीयते। आत्मनोऽपि तद्वाच्यस्य तन्मात्रत्वाभिधानादित्यर्थः। शब्दातिरिक्तार्थाभावे शब्दस्यार्थवाचकत्वानुपपत्तेः। एकत्वे विषयविषयित्वायोगान्निर्विकल्पं सन्मात्रं वस्तु वाच्यवाचकविभागशून्यं पर्यवस्यतीत्यभिप्रेत्य कार्यस्य वस्तुतोऽसत्त्वे प्रमाणमाह। वाचारम्भणमिति। कार्यस्य सर्वस्यैव मिथ्यात्वेऽपि कथमोङ्कारनिर्णयस्य ब्रह्मप्रतिपत्त्युपायत्वसिद्धिरित्याशङ्क्याह। तदस्येति। तदिदं विकारजातमस्य ब्रह्मणः सम्बन्धि वाचा सामान्यरूपया तन्त्र्या प्रसारितरज्जुरूपया सितं बद्धं व्याप्तमिति सम्बन्धः। शब्दसामान्येनार्थसामान्यस्य व्याप्तावपि कथमर्थविशेषस्य शब्दविशेषव्याप्तिरित्याशङ्क्याह। नामभिरिति। शब्दविशेषैर्दामभिर्दामस्थानीयैर्विशेषरूपमपीदमर्थजातं व्याप्तं वक्तव्यं न्यायस्य तुल्यत्वादित्यर्थः। उक्तमर्थं समर्थयते। सर्वं हीति। इदं हि सर्वं सामान्यविशेषात्मकमर्थजातं सामान्यविशेषरूपेण नाम्ना नीयते व्यवहारपथं प्राप्यते तेन नामनीत्युच्यते। तदेवं वागनुरक्तबुद्धिबोध्यत्वाद्वाङ्मात्रं सर्वम्। वाग्जातञ्च सर्वमोङ्कारानुविद्धत्वादोङ्कारमात्रम्। स चोङ्कार उपासनेनात्मधीहेतुरित्यादिप्रकरणारम्भः सम्भवतीत्यर्थः। तद्यथा शङ्कुनेति श्रुतिसंपदार्थमादिपदं प्रतिज्ञातप्रथमप्रकरणार्थसिद्धिरिति शेषः। अर्थमुपपाद्य तस्मिन्नर्थे श्रुतिमवतारयति। अत आहेति। श्रुतिं व्याचष्टे। यदिद

जागरितस्थानो बहिःप्रज्ञः सप्ताङ्ग एकोन

---

कथं चतुष्पात्त्वमित्याह। जागरितं स्थानमस्येति जागरितस्थानः। बहिःप्रज्ञः स्वात्मव्यतिरिक्ते विषये प्रज्ञा यस्य स बहिःप्रज्ञो बहिर्विषयेव प्रज्ञाऽविद्याकृताऽवभासत इत्यर्थः। तथा सप्ताङ्गान्यस्य तस्य ह वैतस्यात्मनो वैश्वानरस्य मूर्द्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मा सन्देहो बहुलो बस्तिरेव रयिः पृथिव्येव पादावग्निहोत्रकल्पनाशेषत्वेनाग्निमुखत्वेनाहवनीय उक्त इत्येवं सप्ताङ्गानि यस्य स सप्ताङ्गः। तथैकोनविंशति मुखान्यस्य बुद्धीन्द्रियाणि कर्म्मेन्द्रियाणि च दश वायवश्च प्राणादयः पञ्च मनो बुद्धिरहङ्कारश्चित्तमिति मुखानीव मुखानि तान्युपलब्धि-

---

पादचतुष्टयन्तु दुर्बोधमिति शङ्कते। कथमिति। परमार्थतश्चतुष्पात्त्वाभावेऽपि काल्पनिकमुपायोपेयभूतं पादचतुष्टयमविरुद्धमित्यभिप्रेत्याद्यं पादं व्युत्पादयति। जागरितेत्यादिना। स्थानमस्याभिमानस्य विषयीभूतमित्यर्थः। प्रज्ञायास्तावदान्तरत्वाद्बहिरि-युक्तमिदं विशेषणमित्याशङ्क्य व्याचष्टे। बहिरिति। चैतन्यस्वभावा प्रज्ञा स्वरूपभूता न बाह्ये विषये प्रतिभासते तस्या विषयानपेक्षत्वात्। बाह्यस्य च विषयस्य वस्तुतोऽभावादित्याशङ्क्याह। बहिर्विषयेवेति। न स्वरूपभूता प्रज्ञा वस्तुतो बाह्यविषयेष्यते बुद्धिविशिष्टरूपा त्वविद्याकल्पिता तद्विषया भवति। न च साऽपि वस्तुतस्तद्विषयतामनुभवति। वस्तुतः स्वयमभावाद्बाह्यस्य विषयस्य काल्पनिकत्वात्तत्तद्विषयत्वं प्रातिभासिकमित्यर्थः। पूर्वेण विशेषणेन विशेषणान्तरं समुच्चिनोति। तथेति। सप्ताङ्गत्वं स्थूलप्रपञ्चेन विश्वस्य विशदयति।

विंशतिमुखः स्थूलभुग्वैश्वानरः प्रथमः पादः ॥३॥

---

द्वाराणीत्यर्थः। स एवंविशिष्टो वैश्वानरो यथोक्तैर्द्वारैः शब्दादीन् स्थूलान् विषयान् भुङ्क्त इति स्थूलभुक्। विश्वेषां नराणामनेकधा नयनाद्विश्वानरः। यद्वा विश्वश्चासौ नरश्चेति विश्वानरः विश्वानर एव वैश्वानरः।

माध्यात्मिकयोस्त्वेकत्वं सिद्धमेव। निर्दिष्टत्वात्। एवञ्च सत्येतत्सिद्धं भविष्यति सर्वद्वैतोपशमे चाद्वैतमिति॥३॥

---

अध्यात्माधिदैवयोरेकत्वमुपेत्याद्वैतपर्यवसाने सिद्धे सत्याध्यात्मिकस्याध्यात्मनो विश्वस्य त्रैलोक्यात्मकेनाधिदैविकेन विराजा सहैकत्वं गृहीत्वा तत्तस्य सप्ताङ्गत्वमुक्तं तदविरुद्धमित्युपसंहरति॥ अत इति॥ अध्यात्माधिदैवयोरैक्ये हेत्वन्तरमाह। मूर्द्धेति॥ दिवाऽऽदित्यादिकं वैश्वानरावयवं वैश्वानरत्वबुद्ध्या ध्यायतो जिगमिषया पुनरवयवत्वमुपगतस्य मूर्द्धा ते व्यपतिष्यद्यन्मां नागमिष्य इत्यन्धोऽभविष्यो यन्मामित्यादिव्यस्तोपासननिन्दा समस्तोपासनविधित्सया दृश्यते। न च द्युलोकादिकं विपरीतबुद्ध्या गृहीतवतः स्वकीयमूर्द्धादिपतनमुचितम्। यद्यध्यात्माधिदैवयोरेकत्वं न भवेत्तस्मात्तयोरेकत्वमत्र विवक्षितं भवतीत्यर्थः॥ ननु विराजो विश्वेनैकत्वमेव मूलग्रन्थे दृश्यते। तत्कथमविशेषेणाध्यात्माधिदैवयोरेकत्वं विवक्षित्वाऽद्वैतपर्यवसानं भाष्यकृतोच्यते तत्राह। विराजेति॥ यन्मुखतो विराजो विश्वेनैकत्वं प्रदर्शितं तत्तु हिरण्यगर्भस्य तैजसेनान्तर्यामिणश्चाव्याकृतोपहितस्य प्राज्ञेन सहैकत्वस्योपलक्षणार्थमतो मूलग्रन्थेऽप्यविशेषेणाध्यात्माधिदैवयोरेकत्वं विवक्षितमित्यद्वैतपर्यवसानसिद्धिरित्यर्थः। अध्यात्माधिदैवयोर्यदेकत्वमिष्टोच्यते तन्मधुब्राह्मणेऽपि दर्शितमित्याह उक्तश्चेति॥ अधिदैवमध्यात्मञ्चैकरूपं निर्दिश्य तत्र प्रतिपर्यायमयमेव स इत्यभेदवचनादैक्यमत्र विवक्षितमित्यर्थः। ननु विश्वविराजोः स्थूलाभिमानित्वात्तैजसहिरण्यगर्भयोश्च सूक्ष्माभिमानित्वादेकत्वं युक्तम्। प्राज्ञाव्याकृतयोस्तु केन साधर्म्येणैकत्वं तत्राह। सुषुप्तेति॥ प्राज्ञो हि सर्वं विशेषमुपसंहृत्य निर्विशेषः सुषुप्ते वर्तते प्रलयदशायामव्याकृतञ्च निःशेषविशेषं स्वात्मन्युपसंहृत्य निर्विशेषरूपं तिष्ठति तेनोक्तं साधर्म्यं पुरोधाय तयोरैक्यमविरुद्धमित्यर्थः। अध्यात्माधिदैवयोरेकत्वे मधुब्राह्मणन्यायेन प्रसिद्धे सत्युपसंहारप्रक्रियया सिद्धमद्वैतमिति फलितमाह। एवञ्चेति॥ तत्राद्वैतं प्रतिपत्तव्यं सामान्येन न स्फुटमिति किन्तु वाक्यादेवाचार्योपदिष्टादिति युक्तमन्दः॥३॥

कञ्चन स्वप्नं पश्यति तत्सुषुप्तम् । सुषुप्तस्थान

हि सुषुप्ते पूर्व्वयोरिवान्यथा ग्रहणलक्षणं स्वप्नदर्शनं कामो वा कश्चन विद्यते । तदेतत्सुषुप्तं स्थानमस्येति सुषुप्तस्थानः । स्थानद्वयप्रविभक्तं मनःस्पन्दितं द्वैतजातम् । तथारूपापरित्यागेनाविवेकापन्नं नैशतमोग्रस्तमिवाहः सप्रपञ्चकमेकीभूतमित्युच्यते । अत एव स्वप्नजाग्रन्मनःस्पन्दनानि प्रज्ञानानि घनीभूतानीव सेयमवस्थाऽविवेकरूपत्वात्प्रज्ञानघन उच्यते । यथा रात्रौ नैशेन तमसाऽविभज्यमानं सर्व्वं घनमिव तद्वत्प्रज्ञानघन एव । एवश-

प्रतिबोधः स्वापस्तस्य स्थानत्रयेऽपि तुल्यत्वाज्जाग्रत्स्वप्नाभ्यां विभज्य सुषुप्तं ग्राहयितुं विशेषणमित्यर्थः ॥ एकस्यैव विशेषणस्य व्यवच्छेदकत्वसम्भवादलं विशेषणाभ्यामित्यस्य कः समाधिरित्याशङ्क्य विशेषणयोर्विकल्पेन व्यवच्छेदकत्वात्सानर्थक्यमिति मत्वाह । न हीति ॥ पदत्रयस्यापेक्षितार्थं कथयति । तदेतदिति ॥ अन्यथा ग्रहणशून्यत्वं कामसंस्पर्शविरहितत्वञ्च विशेषणाभ्यां विवक्षितम् । कथमस्य द्वितीयस्यैकीभूतत्वविशेषणमित्याशङ्क्याह । स्थानद्वयेति ॥ जागरितं स्वप्नश्चेति स्थानद्वयम् । तेन प्रविभक्तं यद्द्वैतं स्थूलं सूक्ष्मञ्च तत्सर्व्वं मनःस्पन्दितमात्रमिति यावत् । तच्च यथा स्वकीयरूपमात्मनो विभक्तं तथैव तस्यात्यागेनाव्याकृताख्यं कारणमापन्नं स्वकीयसर्व्वविशेषसहितं कारणात्मकं भवति । यथाहर्नैशेन तमसा ग्रस्तं तमस्त्वेनैव व्यवह्रियते तथेदमपि कार्य्यजातं कारणभावमापन्नं कारणमित्येव व्यवह्रियते । तस्यावस्थाया तदुपाधिरात्मैकीभूतविशेषणभाग्भवतीत्यर्थः । तथापि कारणोपहितस्य प्रज्ञानघनविशेषणमयुक्तं निरुपाधिकस्यैव तथा विशेषणसम्भवादित्याशङ्क्याह । अत एवेति ॥ समस्तस्य कार्य्यप्रपञ्चस्य घनभावस्य सुषुप्ते कारणात्मना

अथ गौड़पादाचार्य्यकृततदुपनिषदर्थाविष्करणरूप-
श्लोकावतारणम् ॥

॥ अत्रैते श्लोकाः ॥

बहिःप्रज्ञो विभुर्विश्वो ह्यन्तःप्रज्ञस्तु तैजसः ।
घनप्रज्ञस्तथा प्राज्ञ एक एव त्रिधा स्मृतः ॥१॥

---

अत्रैतस्मिन्यथोक्तेऽर्थे एते श्लोका भवन्ति । बहिःप्रज्ञ इति । पर्य्यायेण त्रिस्थानत्वात्सोऽहमिति स्मृत्या प्रतिसन्धानाच्च स्थानत्रयव्यतिरिक्तत्वमेकत्वं शुद्धत्वमसङ्गत्वञ्च सिद्धमित्यभिप्रायः । महामत्स्यादिदृष्टान्तश्रुतेः ॥१॥

---

पदान्तरमित्याह । यत इति । प्रभवत्यस्मादिति प्रभवः । अप्येत्यस्मिन्नित्यप्ययः । न चैतौ भूतानामेकस्योपादानादृते सम्भावितावित्यर्थः ॥६॥

आचार्य्यो माण्डूक्योपनिषदं पठित्वा तद्व्याख्यानश्लोकावतारणमत्रेत्यादिना कृतं तदत्रेत्यनूद्य भाष्यकारो व्याकरोति । एतस्मिन्निति ॥ विश्वस्य विभुत्वं माध्यात्मिकाधिदैविकाभेदादवधेयम् । अध्यात्माधिदैवाभेदे मूर्द्धादात्मतां श्रुतिं सूचयितुं हिशब्दः ॥ सूक्ष्मसूक्ष्मकारणोपाधिभेदाज्जीवभेदमाशङ्क्य स्वरूपैक्येऽपि स्वतन्त्रोपाधिभेदमन्तरेण विशेषणमात्रभेदादवान्तरभेदोक्तिरित्याह । एक एवेति ॥ पदार्थानामेव पूर्व्वोक्तमेवोक्तत्वात्तात्पर्य्यं श्लोकस्य वक्तव्यमवशिष्यते तदाह । पर्य्यायेणेति ॥ यद्यात्मनश्चैतन्यमिव स्वाभाविकं स्थानत्रयं न तर्हि तद्वदेव तं व्यभिचरितुमर्हति व्यभिचरति चात्मानं स्थानत्रयं क्रमाक्रमाभ्यां तस्य त्रिस्थानत्वादत्यन्तव्यतिरिक्तत्वमात्मनः सिद्धम् । यः सुप्तः सोऽहं जागर्म्मीत्यनुसन्धानादेकत्वं तस्यावगतम् । एकत्वेन हि स्मृत्या घटादावेकत्वमिष्यते । धर्म्माधर्म्मरागद्वेषादिमत्त्वस्यावस्थाधर्म्मत्वादात्मनि स्वतः शुद्धत्वमपि सिध्यति । सङ्गस्यापि नेदन्त्वेनापरामर्शान्नी-

समाना प्रसववीजात्मकत्वस्य तदध्यक्षश्चैकोऽव्याकृतावस्थः । परिच्छिन्नाभिमानिनामध्यक्षत्वाच्च तेनैकत्वमिति पूर्वोक्तं विशेषणमेकीभूतः प्रज्ञानघन इत्याद्युपपन्नम् । तस्मिन्नेतस्मिन्नुक्तहेतुत्वाच्च कथं प्राज्ञशब्दत्वमव्याकृतस्य । प्राज्ञ-

---

स्वप्नजागरितयोर्विलक्षणत्वात्तद्द्रष्टोर्विश्वतैजसयोरपि वैलक्षण्यमुचितमित्याशङ्क्याह । यथेति । जागरिते यथार्थजातं दृष्टं पश्यति तथैव स्वप्नेऽपि तदुपलम्भात् ततो न तयोर्वैलक्षण्यसिद्धिरित्यर्थः । द्वितीयपादस्य व्याख्यामुपसंहरति । अत इति । स्थानद्वये द्रष्टृभेदाशङ्का निरवकाशेति दर्शयितुमेवकार । तृतीयं पादं व्याकुर्वन् आपन्नेव सुषुप्तिं दर्शयति । आकाशे चेति । यो विश्वतैजसत्वमुपगतः स पुनः स्वकारणस्य व्यापारस्य व्याहतौ कुत्राविद्धेनाकाशे स्थितः सन् मोघो भूत्वा तल्लक्षणलक्षितो भवति । न हि तस्य रूपविषयदर्शनस्मरणे परिहृत्य विशिष्टाकाशनिविष्टस्य प्राज्ञादर्थान्तरत्वम् । अतश्च स एकीभूतो विषयविषय्याकाररहितः । यतो ग्रस्तग्राह्यो विशेषविज्ञानविरहो रूपान्तररहितस्तिष्ठतीत्यर्थः । चक्षुरर्थं प्रपञ्चयन्मनोव्यापाराभावादिति हेतुमुक्त्वा व्याचष्टे । दर्शनेत्यादिना ॥ अविभक्तव्याकृतरूपेणेत्यर्थः । अयस्थानं जागरिते सुषुप्तमिति शेषः ॥ यदुक्तमव्याकृतेन प्राणात्मना हृदयेऽवस्थानमिति तत्र प्रमाणमाह । प्राणो ह्येतीति । यो हि प्राणोऽध्यात्मं प्रसिद्धः स वागादीन् प्राणात्मनि सर्वाञ् संहरतीति प्राणस्याध्यात्मं वागादिसंहर्तृत्वमुक्तम् । अधिदैवतं यो वायुः सूत्रात्मा सोऽग्न्यादीनात्मनि संहरतीत्यग्न्यादिसंहर्तृत्वं वायोरुक्तम् । अध्यात्माधिदैवयोरैक्यात्प्राणस्य वायोश्च वागादिष्वग्न्यादिषु संहर्तृत्वेनाव्याकृतत्वस्य संवर्गविद्यायां सूचितत्वादव्याकृतेन प्राणात्मना सुषुप्ते प्राज्ञस्यावस्थानमिति यत्तमेवोक्तमित्यर्थः । पूर्वमेव विश्वविराजोरैक्यस्थानान्तरश्च सुषुप्ताव्याकृतयोरैकत्वस्य दर्शितत्वात्तैजसहिरण्यगर्भयोरनुक्तमभेद पक्षम्यमिदानीमुपन्यस्यति । तैजस इति ॥ तत्र हेतुमाह । मन इत्यादिति ॥ हिरण्यगर्भस्य समष्टिमनो

बीजत्वाभ्युपगमेनैव सतः प्राणत्वव्यपदेशः सर्वश्रुतिषु कारणत्वव्यपदेशः । अत एवाक्षरात्परतः परः । सबाह्याभ्यन्तरो ह्यजः । यतो वाचो निवर्त्तन्ते । नेति नेतीत्यादिना बीजवत्त्वापनयनेन व्यपदेशः । तामबीजावस्थां तस्यैव प्राज्ञशब्दवाच्यस्य तुरीयत्वेन देहादिसम्बन्धरहितां पारमार्थिकीं पृथग्वक्ष्यति । बीजावस्थापि न किञ्चिद-

---

प्रज्ञायां विशेषणमग्रहणम् । मिथ्याज्ञानतत्संस्कारयोरज्ञानशब्दवाच्यत्वात्तदाह । ज्ञानेति ॥ अतोऽहमित्यज्ञानमपरोक्षमग्रहणस्य च ग्रहणप्रागभावस्य नापरोक्षत्वमिन्द्रियसन्निकर्षाभावादनुपलब्धिगम्यत्वाच्च भ्रान्तितत्संस्कारयोश्चाभावेतरकार्यत्वादुपादानतापेक्षणादात्मनश्च कौटस्थ्यात्तदुत्पत्त्युपादानत्वेनाज्ञानसिद्धिः । किञ्च देवदत्तप्रमा तन्निष्ठप्रमाप्रागभावातिरिक्तानादिप्रध्वंसिनी प्रमात्वाद्यज्ञदत्तप्रमावत् । न च तदभावे सम्यग्ज्ञानार्थवत्त्वम् क्षणिकत्वेन भ्रान्तेस्तदनिवर्त्त्यत्वात्संस्कारस्य च सत्यपि सम्यग्ज्ञाने कश्चिदनुवृत्तिदर्शनाच्च बाधकस्य तन्निवर्त्तकत्वम् । ज्ञानस्य तद्विरोधित्वात् । अतो ज्ञानदाह्यं संसारबीजभूतमनाद्यनिर्वाच्यमज्ञानं ज्ञानस्यार्थवत्त्वायास्थेयम् । अन्यथा तदानर्थक्यप्रसङ्गादित्यर्थः । एतस्य प्राज्ञयो वाक्यप्रकरणाभ्यां विवक्षितत्वाभावे फलितमाह । तस्मादिति ॥ प्राज्ञस्य प्रबलस्यैव प्राकरणिकत्वाद्वाक्येऽपि तस्मिन् प्राणशब्दाद्युक्तं प्राणशब्दस्याव्याकृतविषयत्वमिति भावः । यतोऽनाद्यनिर्वाच्याज्ञानशबलस्यैव कारणत्वं प्राज्ञयो विवक्ष्यते अत एव कारणत्वनिषेधेन परिशुद्धं ब्रह्म श्रुतिषूपदिश्यते तदेतदाह । अत एवेति ॥ अक्षरमव्याकृतं तच्च कार्यापेक्षया परम् । तस्मात्परतोऽयं परमात्मा । स हि कार्यकारणाभ्यामस्पृष्टो वर्ण्यते । बाह्यं कार्यमभ्यन्तरं कारणमिति । ताभ्यां सह तत्कल्पनाधिष्ठानत्वेन वर्त्तमानत्वज्ञानात् । तथा च स विज्ञातस्वस्वरूपादिसमस्तविशेषशून्यत्वेन कूटस्थः श्रुतिस्मृत्योरुपदिश्यते । यतो प्राज्ञायाः सर्वा-]

विषु धामसु यद्भोज्यं भोक्ता यश्च प्रकीर्त्तितः। वेदैतदुभयं यस्तु स भुञ्जानो न लिप्यते ॥५॥

प्रभवः सर्व्वभावानां सतामिति विनिश्चयः।

---

स भुञ्जानो न लिप्यते। भोज्यस्य सर्व्वस्यैकस्य भोक्तृभोज्यत्वात्। न हि यस्य यो विषयः स तेन हीयते वर्द्धते वा। न ह्यग्निः स्वविषयं दग्ध्वा काष्ठादि तद्वत् ॥५॥

सतां विद्यमानानां स्वेनाविद्याकृतनामरूपमायास्वरूपेण सर्व्वभावानां विश्वतैजसप्राज्ञभेदानां प्रभव उत्पत्तिः। वक्ष्यति च। वन्ध्यापुत्रो न तत्त्वेन मायया वापि

---

भोगप्रयुक्तां तृप्तिमधुना त्रेधा विभजते। स्थूलमिति। उदाहृतश्रुत्योरर्थं स्थानभेदेन दर्शयति। उक्तार्थेति ॥४॥

प्रकृतभोक्तृभोग्यपदार्थद्वयपरिज्ञानस्यावान्तरफलमाह। त्रिष्विति। पूर्व्वार्द्धं व्याचष्टे। आपदादिष्विति। भोग्यत्वेनैकत्वेऽपि त्रैविध्यमवान्तरभेदादुपेयम्। भोक्तुरेकत्वे हेतुमाह। सोऽहमिति। योऽहं स्वप्नः सोऽहं स्वप्नं प्राप्तः। यश्च स्वप्नमद्राक्षं सोऽहमिदानीं जागर्मीत्येकत्वं प्रतिसन्धीयते। न च तत्र बाधकमस्ति। तदुक्तं भोक्तुरेकत्वमित्यर्थः। विश्वाद्यागं तत्कार्यस्य प्रति मात्रादिषु द्रष्टृत्वस्याविशिष्टत्वात्। द्रष्टृभेदे च प्रमाणाभावादुक्तं तदेकत्वमित्याह। द्रष्टृत्वेति। द्वितीयार्द्धं विभजते। यो वेदेति। कथमेतावता भोगप्रयुक्तदोषराहित्यं तत्राह। भोज्यस्येति। यद्यपि भोक्तुरेकस्यैव सर्व्वं भोज्यमित्युपगतं तथापि कथं सर्व्वं भुञ्जानो भोगप्रयुक्तदोषवान् भवतीत्याशङ्क्याह। न हीति। उक्तमर्थं दृष्टान्तेन स्पष्टयति। न ह्यग्निरिति। स्वविषयान् काष्ठादीन् दग्ध्वा न क्षीयते वर्द्धते वाग्निरिति सम्बन्धः ॥५॥

स्वप्नमायासरूपेति सृष्टिरन्यैर्विकल्पिता ॥७॥
इच्छामात्रं प्रभोः सृष्टिरिति सृष्टौ विनिश्चिताः। कालात्प्रसूतिं भूतानां मन्यन्ते कालचिन्तकाः ॥८॥

---

स्वप्नादिविकासस्तदारूढमायाविसमस्य तत्स्वप्नप्राज्ञतैजसादिः सूत्रतदारूढाभ्यामन्यः परमार्थमायावी। स एव भूमिष्ठो मायाच्छन्नोऽदृश्यमान एव स्थितो यथा तथा तुरीयाख्यं परमार्थतत्त्वम्। अतस्तच्चिन्तायामेवादरो मुमुक्षूणामार्य्याणां न निष्प्रयोजनायां सृष्टावादर इति। अतः सृष्टिचिन्तकानामेवैते विकल्पा इत्याह स्वप्नमायासरूपेति। स्वप्नसरूपा मायासरूपा चेति ॥७॥

इच्छामात्रं प्रभोः सत्यसङ्कल्पत्वात्सृष्टिर्घटादिः सङ्कल्पनामात्रं न सङ्कल्पनातिरिक्तं कालादेव सृष्टिरिति केचित् ॥८॥

---

पनादरमत्वनिष्ठानामित्याह। नेति। परमार्थचिन्तकाना सृष्टावनादरादपरमार्थनिष्ठानामेव सृष्टौ विशेषचिन्तेत्युक्तेऽर्थे द्वितीयार्द्धमवतारयति। इत्यत इति। आपाततानामर्थानामेव स्वप्ने प्रथनात्तस्य सत्यत्वं मायायाश्च मायाविलक्षणायाः सत्यत्वाङ्गीकारादनयोर्विकल्पयोः सिद्धान्ताद्वैपरीत्यमुन्नेयम् ॥७॥

सृष्टिचिन्तकानामेव सृष्टिविषये विकल्पान्तरमुपन्यस्यति। इच्छामात्रमिति। ज्योतिर्विदां कल्पनाप्रकारमाह। कालादिति। परमेश्वरस्येच्छामात्रं सृष्टिरित्यत्र हेतुमाह। सत्येति। यथा लोके कुलालादेः सङ्कल्पमात्रं घटादिकार्ये सृष्टिरिष्टा नामरूपाभ्याम-

तत्त्वमसीति यत्। यदि हि त्रयावस्थाव्यतिरिक्तं तुरीयमन्यत्तत्प्रतिपत्तिद्वाराभावाच्छास्त्रोपदेशानर्थक्यं शून्यतापत्तिर्वा रज्जुरिव सर्पादिभिर्विकल्प्यमाना स्थानत्रयेऽपि आत्मैक एवान्तःप्रज्ञादित्वेन विकल्प्यते यदा तदान्तःप्रज्ञादित्वप्रतिषेधविज्ञानप्रमाणसमकालमेवात्मन्यनर्थप्रपञ्चनिवृत्तिलक्षणफलं परिसमाप्तमिति तुरीयाधिगमे प्रमाणान्तरं साधनान्तरं वा न मृग्यम्। रज्जुसर्पविवेकसमकाल इव रज्ज्वां सर्पनिवृत्तिफले सति रज्ज्वधिगमस्य येषां पुनस्तमोऽपनयव्यतिरेकेण घटाधिगमे प्रमाणं व्याप्रियते तेषां छेद्यावयवसम्बन्धवियोगव्यतिरेकेणान्यतरावयवेऽपि छिदिर्व्याप्रियत इत्युक्तं स्यात्। यदा पुनर्घटतमसोर्विवेककरणे प्रवृत्तं प्रमाणमनुपादित्सिततमसो निवृत्तिफलावसानं छिदिरिव छेद्यावयवसम्बन्धविवेककरणे

कालमेव प्रमातृत्वादिभेदनिवृत्तेः । तथा च वक्ष्यति । ज्ञाते द्वैतं न विद्यत इति । ज्ञानस्य द्वैतनिवृत्तिक्षणाव्यतिरेकेण क्षणान्तरानवस्थानात् । अवस्थाने चानवस्थाप्रसङ्गाद् द्वैतानिवृत्तिः । तस्मात्प्रतिषेधविज्ञानप्रमाणव्यापारसमकाल एवात्मन्यध्यारोपितान्तःप्रज्ञत्वाद्यनर्थनिवृत्तिरिति सिद्धम् । नान्तःप्रज्ञमिति तैजसप्रतिषेधः । न बहिःप्रज्ञमिति विश्वप्रतिषेधः । नोभयतःप्रज्ञ-

---

अन्यथाऽन्यतरभिन्नयोर्मिथःसम्पर्कविरहिणोरुपायोपेयभावायोगात्तुरीयप्रतिपत्तौ विशिष्टस्य द्वारत्वाभावादन्यस्य च तत्प्रतिपत्तिद्वारस्यादर्शनात्तुरीयाप्रतिपत्तिरेव स्यादित्यर्थः ॥ शास्त्रात्तत्प्रतिपत्तिः स्यादिति चेन्नेत्याह । शास्त्रेति । तर्हि शिष्टरूपमनूद्य विशेषणांशापोहेन तस्य तुरीयत्वमुपादिशति । भेदे चात्यन्तिके तदानर्थक्यान्न शास्त्रात्तत्प्रतिपत्तिरित्यर्थः । सा तर्हि तुरीयप्रतिपत्तिर्भूयादिति चेत्तत्राह । शून्येति । विशिष्टस्यैव प्रतिपत्त्या तुरीयस्याप्रतिपत्तौ प्रतिपन्नस्य विश्वादेर्विशिष्टस्य प्रत्यक्षत्वादन्यस्य चाप्रतिपन्नत्वाच्छैव-[illegible]धीरेवापद्येतेत्यर्थः । *भेदपक्षे यथोक्तदोषवशात् [illegible] तर्हि माभूदभेदपक्षोऽपि कथं निर्वहतीति चेत्तत्र किं फलं पर्यनुयुज्यते किंवा प्रमाणान्तरमथवा साधनान्तरमिति विकल्प्याद्यं दूषयति । रज्जुरिवेति ॥ यथा रज्जुरविद्यमानभूता सर्पधारादिभिर्विकल्प्यते तथैव परमात्मा स्थानत्रयेऽपि यदा न प्रज्ञत्वादिना विकल्प्यमानो बहुधा भासते तदा तन्निषेधेनात्र प्रज्ञत्वादिप्रतिषेधजनितं यत्प्रमाणरूपविज्ञानं तदुत्पत्तिसमानकालमेवात्मन्यनर्थनिवृत्तिरूपं फलं सिद्धमिति न फलपर्यनुयोगोऽवकाशवानित्यर्थः । *शब्दस्य संसृष्टपरोक्षज्ञानहेतोरसंसृष्टापरोक्षज्ञानहेतुत्वायोगात्तुरीयज्ञाने प्रमाणान्तरमेष्टव्यमिति मतं मत्वाह । तुरीयेति । तस्य हि साक्षात्कारे न प्रमाणान्तरमपेक्ष्यम् । शब्दस्य विषयानुसारेण प्रमाणहेतु-

मिति जाग्रत्स्वप्नयोरन्तरालावस्थाप्रतिषेधः। न प्रज्ञानघनमिति सुषुप्तावस्थाप्रतिषेधः। बीजाभावाविवेकरूपत्वात्। न प्रज्ञमिति युगपत्सर्वविषयज्ञातृत्वप्रतिषेधः। नाप्रज्ञमित्यचैतन्यप्रतिषेधः। कथं पुनरन्तःप्रज्ञत्वादीनामात्मनि गम्यमानानां रज्ज्वादौ सर्पादिवत्प्रतिषेधादसत्त्वं गम्यत इत्युच्यते। ज्ञस्वरूपाविशेषेऽपीतरेतरव्यभिचारात् रज्ज्वादाविव। रज्ज्वादाविव सर्पधारादिविकल्पितभेदवत्सर्वत्राव्यभिचाराज्ज्ञस्वरूपस्य सत्यत्वं सुषुप्ते

---

त्वात्। विषयस्य तुरीयस्यासंस्पृष्टापरोक्षत्वादित्यर्थः। तुरीयसाक्षात्कारे प्रमाज्ञानाख्यं साधनान्तरमेष्टव्यमिति पक्षं प्रतिक्षिपति। साधनान्तरं चेति। प्रमाज्ञानस्याप्रमाणत्वात् प्रमात्वं प्रति हेतुतेति भावः। यथा रज्जुरियं सर्पो नेति विवेकधीसमुदयसाक्षात्कारं यादृशा यास्मिव रज्ज्वां सर्पनिवृत्तिफले सिद्धे रज्जुसाक्षात्कारस्य फलान्तरं प्रमाणान्तरं साधनान्तरं वा न दृश्यते तद्वदात् तथेहापीत्याह। रज्ज्वामिति॥ विषयगतं प्राकट्यं प्रमाणफलं साध्यस्तन्निवृत्तिरित्याशङ्क्याह। येषामिति॥ स्वविषयाज्ञानापनयनाय प्रवृत्ता प्रमाणक्रिया स्वविषये भावरूपमतिशयमाधत्ते चेदुपमयार्थक्रियात्वाविशेषाच्छिदिरपि छेद्यसंयोगापनयनातिरिक्तमतिशयमादध्यात्। न च संयोगविनाशातिरिक्ते विभागे सम्प्रतिपत्तिरस्ति। प्राकट्यस्य च प्राकाश्यत्वे ज्ञानवदर्थनिष्ठत्वप्रकाशत्वे स्यात्। तेनार्थेन विना नार्थोऽस्तीति भावः॥ अज्ञाननिवर्तकमेव प्रमाणमिति पक्षे विषयस्फुरणे कारणाभावाद्घटसंवेदनं न स्यादित्याशङ्क्याह। यदेति॥ घटो हि तमसा समावृतो व्यवहारयोग्यस्तिष्ठति तस्य तमसो निष्कृष्य व्यवहारयोग्यत्वापादने प्रत्यक्षादिप्रमाणं प्रवर्तते। तज्ज्ञानुपादितघटस्यानिष्टस्याप्रमेयस्य तमसो निवृत्तिश्चेद्यदा पर्यवस्यति तदा घटसंवेदनमार्थिकं प्रमाणफलं न भवति। यथा छिदिक्रिया छेद्यस्य तरोरवयव-

व्यभिचरतीति चेन्न । स्वप्नस्यानुभूयमानत्वात् । न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यत इति च श्रुतेः । अत एवादृष्टम् । यस्माददृष्टं तस्मादव्यवहार्यम् । अग्राह्यं कर्मेन्द्रियैरलक्षणमलिङ्गमित्येतदननुमेयमित्यर्थः । अत एवाचिन्त्यम् । अत एवाव्यपदेश्यं शब्दैः । एकात्मप्रत्ययसारं जाग्रदादिस्थानेष्वेकोऽयमात्मेत्यव्यभिचारी यः प्रत्य-

नृतम्। प्राज्ञः किञ्चन संवेत्ति तुर्यं तत्सर्वदृक् सदा॥१२॥

कथं पुनः कारणबद्धत्वं प्राज्ञस्य तुरीये वा तत्त्वाग्रहणान्यथाग्रहणलक्षणौ बन्धौ न सिध्यत इति। यस्मादात्मविलक्षणमविद्याबीजप्रसूतं बाह्यं द्वैतं प्राज्ञो न किञ्चन संवेत्ति यथा विश्वतैजसौ ततश्चासौ तत्त्वाग्रहणेन तमसान्यथाग्रहणबीजभूतेन बद्धो भवति। यस्मात्तुरीयं तत्सर्वदृक् सदा तुरीयादन्यस्याभावात्सर्वदा सर्वदेति। सर्वञ्च तद्दृक्चेति सर्वदृक् तस्मान्न तत्त्वाग्रहणलक्षणं बीजम्। तत्र तत्प्रसूतस्यान्यथाग्रहणस्याप्यत एवाभावो न हि सवितरि सदा प्रकाशात्मके तद्विरुद्धमप्रकाशनं अन्यथा प्रकाशनं वा सम्भवति। नहि द्रष्टुर्दृष्टेर्विपरिलोपो

---

प्राज्ञस्य कारणबद्धत्वं साधयति। नात्मानमिति॥ तुरीयस्य कार्यकारणाभ्यामसंस्पृष्टत्वं स्फुटयति तुर्यमिति॥ श्लोकव्यावर्त्यामाशङ्कामाह। कथमिति॥ पुनःशब्दात्कथमित्यस्यानुवृत्तिः सूच्यते। प्रथमपादाक्षरार्थं न पादत्रयं व्याचष्टे। यस्मादिति॥ विलक्षणमनात्मानमिति यावत्। अनृतमित्यस्य व्याख्यानमविद्याबीजप्रसूतमिति द्वैतं द्वितीयमसत्यमित्यर्थः। वैधर्म्योदाहरणम्। यथेति॥ प्राज्ञस्य विभागविज्ञानाभावे फलमाह। ततश्चेति॥ यथोक्तं तमसि कार्यलिङ्गमनुमानं सूचयति। अन्यथेति॥ द्वितीयं चार्धं चतुर्थपादव्याख्यानेन व्याचष्टे। यस्मादित्यादिना॥ सर्वदेव तुरीयादन्यस्याभावात्तुरीयमेव सर्वं तच्च सदा दृक्स्वरूपमिति यस्मात्तस्मादिति योजना। तत्रेति परिपूर्णचिदेकतानं तुरीयं परामृश्यते। अत एवेति कारणा-

अन्यथा गृह्णतः स्वप्नो निद्रा तत्त्वमजानतः । विपर्यासे तयोः क्षीणे तुरीयं पदमश्नुते ॥१५॥

---

इत्युक्तम् । नोभयं पश्यन्ति तुरीये निश्चिता ब्रह्मविदो विरुद्धत्वात्सवितरीव तमः । अतो न कार्यकारणबद्ध इत्युक्तस्तुरीय ॥१४॥

कदा तुरीये निश्चितो भवतीत्युच्यते । स्वप्नजागरितयोरन्यथा रज्ज्वां सर्प इव गृह्णतस्तत्त्वं स्वप्नो भवति। निद्रा तत्त्वमजानतस्तिसृष्ववस्थासु तुल्या । स्वप्ननिद्रयोस्तुल्यत्वाद्विश्वतैजसयोरेकराशित्वम् । अन्यथाग्रहणात् प्राधान्याच्च गुणभूता निद्रेति तस्मिन् विपर्यास स्वप्न । तृतीये तु स्थाने तत्त्वाग्रहणलक्षणा निद्रैव केवला विपर्यास । अतस्तयो कार्यकारणस्थानयोरन्यथाग्रहणाग्रहणलक्षणविपर्यासे कार्यकारणबन्धरूपे परमार्थतत्त्वप्रतिबोधत क्षीणे तुरीयं पदमश्नुते तदोभयलक्षणं बन्धरूपं तत्रापश्यन् तुरीये निश्चितो भवतीत्यर्थ ॥१५॥

---

स्त्विति ॥ द्वितीयार्धं व्याचष्टे । नोभयमिति । तुरीये निद्रास्वप्नयोरदर्शने हेतुमाह । विरुद्धत्वादिति । यथा [illegible] स-वितृरूपे तुरीये विरुद्धत्वादनुपपन्ने [illegible] । अविरोधो नेति । तुरीये वस्तुतो नाविद्यातत्कार्ययो बन्धुस्तस्तोऽपि तस्य प्रागपि सूचितमित्याह । अतो नेति ॥१४॥

कदा तर्हि तत्र भवतोऽवस्थायामाह । अन्यथेति । निद्रा तर्हि कदेति अविद्यानमित्याह । निद्रेति । तुरीयप्राप्तिप्रतिबन्धकं सति

अनादिमायया सुप्तो यदा जीवः प्रबु

योऽयं संसारी जीवः स उभयलक्षणेन तत्त्वाप्रतिबोधरूपेण बीजात्मना अन्यथाग्रहणलक्षणेन चानादिकालप्रवृत्तेन मायालक्षणेन स्वप्नेन ममायं पिता पुत्रोऽयं नप्ता क्षेत्रं पशवोऽहमेषां स्वामी सुखी दुःखी क्षयितोऽहमनेन वर्द्धितश्चानेनेत्येवंप्रकारान् स्वप्नान् स्थानद्वयेऽपि पश्यन् सुप्तो यदा वेदान्तार्थतत्त्वाभिज्ञेन परमकारुणिकेन गुरुणा नास्येवं त्वं हेतुफलात्मकः किन्तु तत्त्वमसीति प्रतिबोध्यमानो यदा तदैवं प्रतिबुध्यते। कथं नास्मिन् बाह्यमाभ्यन्तरं वा जन्मादिभावविकारोऽस्त्यतोऽजं सबाह्याभ्यन्तरसर्व्वभावविकारवर्जितमित्यर्थः। यस्माज्जन्मादिकारणभूतं नास्मिन्नविद्यातमोबीजं निद्रा विद्यत इत्य-

रते। विपर्यास इति॥ श्लोकव्याख्यानाकाङ्क्षां दर्शयति। कदेति॥ कदा स्वप्ननिष्ठो भवति कदा निद्रानिष्ठः स्यादित्यपि द्रष्टव्यम्॥ प्रश्नत्रयस्योत्तरं श्लोकेन दर्शयति। अन्यथेति॥ तत्र कदा स्वप्नो भवतीति प्रश्नं परिहरति। स्वप्नेति॥ अवस्थाद्वये स्वप्नद्रष्टुरित्यर्थः। द्वितीयं प्रश्नं समाधत्ते। निद्रेति॥ विश्वादिषु त्रिषु तयोरिति द्विवचनं कथमित्याशङ्क्याह। स्वप्ननिद्रयोरिति॥ विश्वतैजसावेको राशिः। प्राज्ञो द्वितीयः ततः श्लोके द्विवचनमविरुद्धमित्यर्थः। प्रथमे राशौ विपर्यासस्वरूपं कथयति। अन्यथेति॥ द्वितीये राशौ विपर्यासविशेषं दर्शयति। तृतीये त्विति॥ द्वितीयार्द्धगतान्यक्षराणि व्याकरोति। अत इति॥ द्विवचनस्योपपन्नत्वाद्विपर्यासस्य च विभागेन निर्द्धारितत्वादित्यर्थः। तृतीयं प्रश्नं प्रतिविधत्ते। कदेति॥ तत्त्वप्रबोधाद्विपर्यासद्वयापायादित्यर्थः॥१५॥

मायामात्रमिदं द्वैतमद्वैतं परमार्थतः॥१७॥

---

द्वैतं रज्जुवन्मायाविवर्त्ताद्द्वैतं परमार्थतस्तस्मान्न कश्चित्प्र-पञ्चः प्रवृत्तो निवृत्तो वास्तीत्यभिप्रायः ॥१७॥

विकल्पो विनिवर्त्तेत कल्पितो यदि केनचित् । उपदेशादयं वादो ज्ञाते द्वैतं न विद्यते ॥१८॥

---

ननु शास्ता शास्त्रं शिष्य इति विकल्पः कथं निवृत्त इत्युच्यते । विकल्पो विनिवर्त्तेत यदि केनचित्कल्पितः स्यात् । यथाऽयं प्रपञ्चो मायारज्जुसर्पवत्तथाऽयं शिष्यादिभेदविकल्पोऽपि प्राक् प्रतिबोधादेवोपदेशनिमित्तोऽत उपदेशादयं वादः शिष्यः शास्ता शास्त्रमित्युपदेशकार्ये तु ज्ञाने निर्वृत्ते ज्ञाते परमार्थतत्त्वे द्वैतं न विद्यते ॥ १८ ॥

---

वृत्तिरवस्थाविर्भावः । कार्यस्य च निवृत्तिर्नाम कारणसंसर्गस्तथा सति कारणे प्रपञ्चनिवृत्तेरनात्यन्तिकत्वादद्वैतानुपपत्तिरित्याशङ्क्याह । न च कारणाधीनः सन् प्रपञ्चोऽस्ति । तस्य कल्पितत्वेनावस्तुत्वादित्यर्थः । प्रपञ्चस्य मायया विद्यमानत्वं न तु वस्तुत्वमित्युदाहरणाभ्यामुपपादयति । न हीत्यादिना । सर्पो हि रज्ज्वां भ्रान्त्या कल्पितो न तु सर्पो रज्ज्वां वर्तते विवेकधिया निवृत्तो नैव वस्तुतो विद्यते । बाधितस्य कालत्रयेऽपि सत्त्वाभावात् । माया चेन्द्रजालशब्दवाच्या मायाविना प्रदर्शिता पश्यतां मायादर्शनवतां चक्षुर्गतस्य यथार्थदर्शनप्रतिबन्धकस्यापगमे सति अनुपलभ्यमाना दर्शनवतां निवृत्ता सती नैव वस्तुतो विद्यमाना भवितुमुत्सहते । यथोक्तमुदाहरणद्वयं तथेदं द्वैतं प्रपञ्चाख्यं मायामात्रं न परमार्थतोऽस्तीत्यर्थः । प्रपञ्चस्यावस्तुत्वे शून्यवादः स्यादित्याशङ्क्याह । रज्जुवदिति । प्रपञ्चस्य कालत्रयेऽपि सत्त्वाभावेऽपि वास्तवमद्वैतं सर्वविकल्पनिर्मुक्तमस्तीति । तदाहाद्वैतमिति ॥१७॥

प्रकारान्तरेणाद्वैतानुपपत्तिमाशङ्क्य परिहरति । विकल्प इति । यदि केनचिदयमात्मा तत्त्वज्ञानेन कार्येण शास्त्रादिविकल्पो केवलम

## ॥ उपनिषद् ॥

सोऽयमात्माऽध्यक्षरमोङ्कारोऽधिमात्रं पादा-

---

अभिधेयप्रधान ओङ्कारश्चतुष्पादात्मेति व्याख्यातो यः सोऽयमात्माऽध्यक्षरमक्षरमधिकृत्याभिधानप्राधान्येन वर्ण्यमानोऽध्यक्षरम्। किं पुनस्तदक्षरमित्याह। ओङ्कारः। सोऽयमोङ्कारः पादशः प्रविभज्यमानोऽधिमात्रं मात्रा-

---

विकल्पस्तत्त्वज्ञानदशायां बाधितो निवर्तेत न तु तात्त्विकमद्वैतं विरोद्धुमर्हति। तत्त्वज्ञानात्प्रागवस्थायामेव तत्त्वोपदेशं निमित्तीकृत्य यतः। शास्त्रादिभेदोऽनूद्यते। उपदेशप्रयुक्ते तु ज्ञाने निर्वृत्ते न किञ्चिदपि द्वैतमस्तीत्यद्वैतमविरुद्धमित्यर्थः। गुर्वादिभेदमाशङ्क्याह। नन्विति तदनिवृत्तौ नाद्वैतसिद्धिर्न च शास्त्रादिभेदस्य कल्पितत्वादविरोधः। तथा सति धूमाभासवत्तत्त्वज्ञानहेतुत्वानुपपत्तिरित्यर्थः॥ धूमाभासस्याव्याप्यत्वात्तत्त्वेऽपि कल्पितस्य शास्त्रादेस्तत्त्वज्ञानहेतुत्वं प्रतिबिम्बादिवदुपपन्नमित्युत्तरमाह। उच्यत इति॥ शिष्य शास्ता शास्त्रमित्ययं विकल्पो विभागः सोऽपि निवृत्तिप्रतियोगित्वादप्रमात्वाज्ज्ञानसाध्यत्वादद्वैताविरोधीत्यर्थः॥ शिष्यादिविभागस्य कल्पितत्वं दृष्टान्तेन स्पष्टयति। यथेति मायाविना प्रयुक्ता माया यथा कल्पितेष्यते यथा च सर्पधारादिर्विकल्पितस्तथाऽयं प्रपञ्चः सर्वोऽपि कल्पितो वस्तु न भवतीति प्रपञ्चितं तथैव प्रपञ्चैकदेशः शिष्यादिरपि ज्ञानात्प्राक्कल्पितः सन्-ज्ञानकृतो मिथ्येत्यर्थः॥ किमिति ज्ञानात्पूर्वमसौ कल्प्यते तत्राह। उपदेशेति॥ उपदेशमुद्दिश्य यथोक्तविभागवचनमित्यर्थमुपसंहरति। अत इति॥ उपदेशात्प्रागिव तस्मादूर्ध्वमपि भेदोऽनुवर्ततामित्याशङ्क्य विरोधिज्ञानान्नैवमित्याह। उपदेशे इति॥१८॥

तत्त्वज्ञानसमर्थानां मध्यमानामुत्तमानाञ्चाधिकारिणामध्यारोपापवादाभ्यां पारमार्थिकं तत्त्वमुपदिष्टमिदानीं तत्त्वग्रहणासमर्थो-

मात्रा मात्राश्च पादा अकार उकारो मकार इति ॥८॥

जागरितस्थानो वैश्वानरोऽकारः प्रथमा

---

अधिकृत्य वर्त्तत इत्यधिमात्रम् । कथमात्मनो ये पादास्ते-ओङ्कारस्य मात्राः । कास्ताः । अकार उकारो मकार इति ॥८॥

तत्र विशेषनियमः क्रियते । जागरितस्थानो वैश्वानरो यः स ओङ्कारस्याकारः प्रथमा मात्रा । केन सामान्येनेत्याह । आप्तेराप्तिर्व्याप्तिरकारेण सर्व्वा वाग्व्याप्ता । अकारो वै सर्व्वा वागिति श्रुतेः । तथा वैश्वानरेण जगत् । तस्य ह वैतस्यात्मनो वैश्वानरस्य मूर्द्धैव सुतेजा इत्यादि श्रुतेः । अभिधानाभिधेययोरेकत्वञ्चावोचाम । आदिरस्य विद्यत इत्यादिमद्यथैवादिमदकाराख्यमक्षरं तथैव वैश्व-

---

नामप्राधान्येनाभिधानविधयात्मोङ्कारोपदिष्टमेवाध्यक्षरमाचष्टे अभिधेयेत्यादिना । अध्यक्षरमित्येतद्व्याकरोति । अक्षरमिति । अध्यक्षरमित्युक्ते किं पुनस्तदक्षरमिति प्रश्नपूर्व्वकं व्युत्पादयति किं पुनरित्यादिना । तस्य विशेषणान्तरं दर्शयति । सोऽयमिति । आत्मा हि पादशो विभज्यते मात्रामधिकृत्य पुनरोङ्कारो व्यवतिष्ठते तत्कथं पादशो विभज्यमानस्याधिमात्रत्वमिति पृच्छति । कथमिति । पादानां मात्राणाञ्चैकत्वादेतदविरुद्धमित्याह । आत्मन इति ॥८॥

पादानां मात्राणाञ्च मध्ये विश्वाख्यविशेषस्याकारविशेषत्वे निगमयति । तत्रेति । विश्वाकारयोरेकत्वं शास्त्रे समारोपयितुं सम्य-क्सम्यक् सत्येन तदाश्रयारोपसम्बन्धं नाकथा च किं तदारोपप्रयोजकं

मात्राप्तेरादिमत्त्वाद्वाप्नोति ह वै सर्वान् कामा नादिश्च भवति य एवं वेद ॥९॥

स्वप्नस्थानस्तैजस उकारो द्वितीया मात्रोत्कर्षादुभयत्वाद्वोत्कर्षति ह वै ज्ञानसन्ततिं

---

नरस्तस्माद्वा सामान्यादकारत्वं वैश्वानरस्य। तदेकत्वविदः फलमाह। आप्नोति ह वै सर्वान् कामानादिः प्रथमश्च भवति महतां य एवं वेद यथोक्तमेकत्वं वेदेत्यर्थः ॥९॥

स्वप्नस्थानस्तैजसो यः स ओङ्कारस्योकारो द्वितीया मात्रा। केन सामान्येनेत्याह। उत्कर्षात्। अकारादुत्

---

सादृश्यमिति पृच्छति। केनेति॥ सामान्योपन्यासपरां श्रुतिमवतारयति। आहेति॥ व्याप्तिमेवाकारस्य मुख्यपक्षाश्रयेण व्यनक्ति। अकारेणेति॥ अध्यात्माधिदैविकयोरेकत्वं पूर्वमुक्तमुपेत्य विश्वस्य वैश्वानरस्य जगद्व्याप्तिं व्यपदेशेन सूचयति। तैरेति॥ किञ्च सामान्यद्वारा वाच्यवाचकयोरेकत्वमारोप्य न भवति तयोरेकत्वस्य प्रागेवोक्तत्वादित्याह। अभिधानेति॥ सामान्यान्तरमाह। आदिरिति॥ तदेव स्फुटयति। यथैवेति॥ उकारो मकारश्चेत्युभयमपेक्ष्य प्रथमपाठादिमत्त्वमकारस्य द्रष्टव्यम्। विश्वस्य पुनरादिमत्त्वम्। तैजसप्राज्ञावपेक्ष्याद्यस्थाने वर्त्तमानत्वादित्यर्थः॥ उक्तस्य सामान्यान्तरस्य फलं दर्शयति। तस्मादिति॥ किमर्थमित्थं सामान्यद्वारा तयोरेकत्वमुच्यते तद्विज्ञानस्य फलवत्त्वादित्याह। तदेकत्वेति ॥९॥

सादृश्यविकल्पादेव फलविकल्पः॥ द्वितीयपादस्य द्वितीयमात्रायाश्चैकत्वं व्यपदिशति। स्वप्नेत्यादिना॥ यथा प्रथमपादस्य प्रथममात्रायाश्चैकत्वं सामान्यं पुरस्कृत्योक्तं तथा द्वितीयपादस्य

सुषुप्तस्थानः प्राज्ञो मकारस्तृतीया मात्रा मितेरपीतेर्वा मिनोति ह वा इदं सर्वमपीतिश्च भवति य एवं वेद ॥११॥

---

सुषुप्तस्थानः प्राज्ञो यः स ओङ्कारस्य मकारस्तृतीया मात्रा। केन सामान्येनेत्याह सामान्यमिदमत्र। मितेर्मितिर्मानं मीयेत इव हि विश्वतैजसौ प्राज्ञेन प्रलयोत्पत्त्योः प्रवेशनिर्गमाभ्याम्। प्रस्थेनेव यवाः। तथा ओङ्कारसमाप्तौ पुनः प्रयोगे च प्रविश्य निर्गच्छत इवाकारोकारौ मकारे। अपीतेर्वाऽपीतिरप्यय एकीभावः। ओङ्कारोच्चारणेऽन्त्येऽक्षरे एकीभूताविवाकारोकारौ। तथा विश्वतैजसौ सुषुप्तकाले प्राज्ञे। अतो वा सामान्यादेकत्वं प्राज्ञमकारयोः। विद्वत्फलमाह। मिनोति ह वेद सर्वं जगद्याथात्म्यं जानातीत्यर्थः। अपीतिश्च जगत्कारणात्मा भवतीत्यर्थः। अत्रावान्तरफलवचनं प्रधानसाधनस्तुत्यर्थम् ॥११॥

---

तृतीयपादस्य तृतीयमात्रयैकत्वमुपन्यस्यति। सुषुप्तेति। पूर्ववदेकत्वप्रयोजकमत्रापि मन्त्रपूर्वकमुपदर्शयति। केनेत्यादिना। मानमेव विवृणोति। मीयेत इति। ओमित्योङ्कारस्य नैरन्तर्येणोच्चारणे अत्यकारोकारौ प्रथमं मकारे प्रविश्य पुनस्तस्मान्निर्गच्छन्ताविवोपलभ्येते तेन मकारेऽपि मानसामान्यमिति वक्तव्यमित्यर्थः। एकीभावमेव स्फोरयति। ओङ्कारेति। मकारस्य प्राज्ञेऽपि तदस्ति सामान्यमित्याह। तथेति। उक्तस्यापि सामान्यस्य फलमाह। अतो वेति। सामान्यद्वयद्वारेण प्राज्ञमकारयोरेकत्वज्ञानं नाविफलितं फलवत्त्वादित्याह। विद्वदिति। अविदुषोऽपि जगद्विषयज्ञानमस्ती-

तैजसस्योत्वविज्ञाने उत्कर्षो दृश्यते स्फुटम्।
मात्रासम्प्रतिपत्तौ स्यादुभयत्वं तथाविधम्॥२०॥
मकारभावे प्राज्ञस्य मानसामान्यमुत्कटं।
मात्रासम्प्रतिपत्तौ तु लयसामान्य मेव च॥२१॥
त्रिषु धामसु यत्तुल्यं सामान्यं वेत्ति

---

तैजसस्योत्वविज्ञाने उकारत्वविवक्षायामुत्कर्षो दृश्यते स्फुटं स्पष्ट इत्यर्थः। उभयत्वञ्च स्फुटमेवेति। पूर्ववत् सर्व्वम्॥२०॥

मकारत्वे प्राज्ञस्य मितिलयावुत्कृष्टे सामान्य इत्यर्थः॥२१॥

यथोक्तस्थानत्रये तुल्यमुक्तं सामान्यं वेत्त्येवमेवैतदिति निश्चितो यः सम्पूज्यो वन्द्यश्च ब्रह्मविल्लोके भवति॥२२॥

यथोक्तैः सामान्यैरात्मपादानां मात्राभिः सहैकत्वं

निश्चितः । सम्पूज्यः सर्वभूतानां वन्द्यश्चैव महामुनिः ॥२२॥

अकारो नयते विश्वमुकारश्चापि तैजसम् । मकारश्च पुनः प्राज्ञं नामात्रे विद्यते गतिः ॥२३॥

---

कृत्वा यथोक्तोङ्कारं प्रतिपद्य यो ध्यायीत तमकारो नयते विश्वं प्रापयति अकारालम्बनोङ्कारं विद्वान् वैश्वानरो भवतीत्यर्थः । तथोकारस्तैजसम् । मकारश्चापि पुनः प्राज्ञं चशब्दान्नयत इत्यनुवर्तते । क्षीणे तु मकारे बीजभावक्षयादमात्रे ओङ्कारे गतिर्न विद्यते क्वचिदित्यर्थः ॥२३॥

---

त्रिविति । यथोक्तस्थानत्रयं जागरितं स्वप्नं सुषुप्तं चेति । वितथं तुल्यं पादानां मात्राणां चेति शेषः । उक्तं सामान्यान्निश्चितत्वमिमितिरित्यादिना ॥ महामुनिरित्यस्यार्थमाह । सर्वविदिति ॥२२॥

पूर्वोक्तसामान्यज्ञानवतो ध्याननिष्ठस्य फलविभागं दर्शयति । अकार इति ॥ यत्र तु पादानां मात्राणां च विभागो नास्ति तस्मिन्नोङ्कारे तुरीयात्मनि व्यवस्थितस्य प्राप्तृप्राप्यप्राप्तिविभागो नास्तीत्याह । नामात्र इति ॥ ओङ्कारध्यायिनमकारो विश्वं प्रापयतीत्युक्तमयुक्तम् । विश्वप्राप्तेर्ध्यानमन्तरेण सिद्धत्वात् । अकारस्य चाध्येयस्योक्तफलप्रापकत्वायोगादित्यत आह । अकारेति ॥ तदालम्बनं तत्प्रधानमिति यावत् । अकारप्रधानमोङ्कारं ध्यायतो यथा वैश्वानरप्राप्तिस्तथोकारप्रधानं तमेव ध्यायतस्तैजसस्य हिरण्यगर्भप्राप्तिर्भवतीत्याह । तथेति ॥ यस्तु मकारप्रधानमोङ्कारं ध्यायति तस्य प्राज्ञाव्याकृतप्राप्तिर्युक्तेत्याह । मकारश्चेति ॥ क्रियापदानुवृत्तिश्चशब्दस्य विवक्षिता ॥ चतुर्थपादं व्याचष्टे । क्षीणे त्विति सूक्ष्मप्रपञ्चो जागरित

॥ उपनिषद् ॥

अमात्रश्चतुर्थोऽव्यवहार्यः प्रपञ्चोपशमः शिवोऽद्वैत एवमोङ्कार आत्मैव संविशत्यात्म-

---

अमात्रो मात्रा यस्य नास्ति सोऽमात्र ओङ्कारश्चतुर्थस्तुरीय आत्मैव केवलोऽभिधानाभिधेयरूपयोर्वाङ्मनसयोः क्षीणत्वादव्यवहार्यः । प्रपञ्चोपशमः शिवोऽद्वैतः संवृत्त एवं यथोक्तविज्ञानवता प्रयुक्त ओङ्कारस्त्रिमात्रस्त्रिपाद आत्मैव संविशत्यात्मना स्वेनैव स्वं पारमार्थिकमात्मानं य एवं वेद । परमार्थदर्शिना ब्रह्मविदा तृतीयं बीजभावं दग्ध्वाऽऽत्मानं प्रविष्ट इति न पुनर्जायते तुरीयस्याबीजत्वात् । न हि रज्जुसर्पयोर्विवेके रज्ज्वां प्रविष्टः

इति माण्डूक्योपनिषन्मूलमन्त्राः समाप्ताः ॥ ओं तत्सत् हरिः ओं ॥

॥ गौडपादीयश्लोकाः ॥

ओंकारं पादशो विद्यात् पादा मात्रा न संशयः। ओंकारं पादशो ज्ञात्वा न किञ्चिदपि चिन्तयेत् ॥२४॥

---

इति माण्डूक्यमूलमन्त्रभाष्यम् ॥ ओं ॥

पूर्वमन्त्रस्यैते श्लोका भवन्ति। यथोक्तैः सामान्यैः पादा एव मात्रा मात्राश्च पादास्तस्मादोंकारं पादशो विद्यादित्यर्थः। एवमोंकारे ज्ञाते दृष्टार्थमदृष्टार्थं वा न किञ्चित्प्रयोजनं चिन्तयेत् कृतार्थत्वादित्यर्थः ॥२४॥

युञ्जीत प्रणवे चेतः प्रणवो ब्रह्म निर्भयम्।
प्रणवे नित्ययुक्तस्य न भयं विद्यते क्वचित् ॥२५॥
प्रणवो ह्यपरं ब्रह्म प्रणवश्च परः स्मृतः।

---

युञ्जीत समादध्यात् यथा व्याख्याते परमार्थरूपे प्रणवे चेतो मनो यस्मात्प्रणवो ब्रह्म निर्भयम्। न हि तत्र सदा युक्तस्य भयं विद्यते क्वचिद्विद्वान्न बिभेति कुतश्चनेति श्रुतेः ॥२५॥

परापरे ब्रह्मणी प्रणवः परमार्थतः क्षीणेषु मात्रापादेषु पर एवात्मा ब्रह्मेति न पूर्वं कारणमस्य विद्यत इत्यपूर्वः। नास्यान्तरं भिन्नजातीयं किञ्चिद्विद्यत इत्य-

---

ब्रह्मणञ्जसा जानीयादित्याह। ओङ्कारमिति। उक्तार्थस्य तात्पर्यमाह। एवमिति। २४।

* प्रणवानुसन्धानकुशलस्य प्रणवध्यानेनैव सर्वद्वैतापवादद्वारेण कृतार्थता भवतीत्युक्तम्। इदानीं तदनभिज्ञस्य परोपदेशमात्रशरणस्य ध्यानकर्तव्यतां कथयति। युञ्जीतेति। ननु मनसः समाधानं ब्रह्मणि कर्तव्यं किमिति प्रणवे तत्कर्तव्यत्वमुच्यते तत्राह। प्रणव इति। सम्प्रति प्रणवे समाहितचित्तस्य फलं दर्शयति। प्रणवे नित्यं इति। समाधानविषयमाह। यथेति। तुरीयरूपे यथोच्यते तत्र हेतुमाह। यस्मादिति। उक्तं साधयति। न हीति। तत्र तैत्तिरीयकश्रुत्याऽऽनुकूल्यमाह। विद्वानिति। २५।

कीदृशस्तर्हि प्रणवो मन्दानां मध्यमानाञ्चाधिकारिणां ध्येयो भवतीत्याशङ्क्याह। प्रणवे हीति। उत्तमाधिकारिणां कीदृशस्तर्हि प्रणवः सम्यग्ज्ञानगोचरो भवति तत्राह। पूर्व इति। परापरब्रह्मा

अपूर्वोऽनन्तरो वाह्योऽनपरः प्रणवोऽव्ययः॥२६॥

सर्व्वस्य प्रणवो ह्यादिर्मध्यमान्तस्तथैव च।
एवं हि प्रणवं ज्ञात्वा व्यश्नुते तदनन्तरम् ॥२७॥

---

नन्तरः। तथा वाह्यमन्यन्न विद्यत इत्यवाह्यः। अपरं कार्य्यमस्य न विद्यत इत्यनपरः। स वाह्याभ्यन्तरो ह्यजः सैन्धवघनवदित्यर्थः॥२६॥

आदिमध्यान्ता उत्पत्तिस्थितिप्रलयाः। सर्व्वस्यैव मायाहस्तिरज्जुसर्पमृगतृष्णिकास्वप्नादिवदुत्पद्यमानस्य वियदादिप्रपञ्चस्य यथा मायाव्यादयः एवं हि प्रणवमात्मानं मायाव्यादिस्थानीयं ज्ञात्वा तत्क्षणादेव व्यश्नुत इत्यर्थः॥२७॥

अमात्रोऽनन्तमात्रश्च द्वैतस्योपशमः शिवः।
ओङ्कारो विदितो येन स मुनिर्नेतरो जनः
॥२६॥

अमात्रस्तुरीय ओङ्कारो मीयतेऽनयेति मात्रापरिच्छित्तिः सा अनन्ता यस्य सोऽनन्तमात्रः। नैतावत्त्वमस्य परिच्छेत्तुं शक्यत इत्यर्थः। सर्वद्वैतोपशमत्वादेव शिवः। ओङ्कारो यथा व्याख्यातो विदितो येन स परमार्थतत्त्वस्य मननान्मुनिः। नेतरो जनः शास्त्रविदपीत्यर्थः॥ २९॥

इति माण्डूक्योपनिषदर्थाविष्करणपरायां गौड़पादीयकारिकायां प्रथममागमप्रकरणम्
॥ ओं तत्सत् ॥

---

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंस परिव्राजकाचार्य्यस्य शङ्करभगवतः कृतावागमशास्त्रविवरणे गौड़पादीयकारिकासहितमाण्डूक्योपनिषद्भाष्ये प्रथममागमप्रकरणं सम्पूर्णम् ॥ ओं तत्सत् ॥

---

इति श्रीमत्परमहंसपरिव्राजकाचार्य्य श्रीशुद्धानन्दपादपूज्य शिष्यभगवदानन्दज्ञानविरचितायां माण्डूक्योपनिषदाविष्करणपर गौड़पादीयकारिकाभाष्यटीकायां प्रथममागमप्रकरणं सम्पूर्णं ॥ ओं तत्सत् ॥१॥

---

## अथ गौडपादीयकारिकायां वैतथ्याख्यं द्वितीयं प्रकरणम्॥

हरिः ओं॥

वैतथ्यं सर्व्वभावानां स्वप्न आहुर्मनी-

---

ओं॥ ज्ञाते द्वैतं न विद्यत इत्युक्तम्। एकमेवाद्वितीयमित्यादिश्रुतिभ्यः। आगममात्रं तत्तत्रोपपत्त्यापि द्वैतस्य वैतथ्यं शक्यतेऽवधारयितुमिति द्वितीयं प्रकरणमारभ्यते। वैतथ्यमित्यादिना। वितथस्य भावो वैतथ्यं असत्यत्वमित्यर्थः। कस्य। सर्व्वेषां बाह्याध्यात्मिकानां भावानां पदार्थानां स्वप्न उपलभ्यमानानामाहुः कथयन्ति मनीषिणः प्रमाणकुशलाः। वैतथ्ये हेतुमाह। अन्तःस्थानात्। अन्तःशरीरस्य मध्ये स्थानं येषाम्। तत्र हि भावा उपलभ्यन्ते पर्व्वतहस्त्यादयो न वहिः शरीरात्।

पश्यति। प्रतिबुद्धश्च वै सर्वस्तस्मिन् देशे न विद्यते॥२॥

अभावश्च रथादीनां श्रूयते न्यायपूर्वकम्।

---

सुप्तोऽहनि इव भावान् पश्यति बहुभिः सङ्गतो यैश्च सङ्गतो भवति तैर्गृह्येत॥ न च गृह्यते। गृहीतश्चेत् त्वामद्य तत्रोपलब्धवन्तो वयमिति ब्रूयुः। न चैतदस्ति। तस्मान्न देशान्तरं गच्छति स्वप्ने॥२॥

इतश्च स्वप्नदृश्या भावा वितथाः। यतो अभावश्चैव रथादीनां स्वप्नदृश्यानां श्रूयते न्यायपूर्वकं युक्तितः श्रुतौ

---

तथापि गत्वा स्वप्नदर्शने कानुपपत्तिरित्याशङ्क्याह। यदि चेति॥ अन्तरेव स्वप्नदर्शनमिति स्थिते स्वप्नमिथ्यात्वमुचितकालशून्यत्वादित्युक्तं प्रपञ्चयति। रात्राविति॥ यद्यपि रात्रौ निद्रामुपगतस्तथापि भावानहनि पश्यन्निव तिष्ठति स्वप्ने सहृदयबन्धुरादिकमथोऽपि पश्यति। प्रयाणेऽपि पर्यटन प्रतिपद्यते। यद्यपि सहायविहीनः स्वप्नस्तथापि बहुभि सहाय स्वप्नानुपलभ्यते। तस्मादुचितस्य कालस्य करणस्य सहकारिणश्चाभावेऽपि स्वप्नदर्शनात्तस्मिन्मिथ्यात्वं सिद्धमित्यर्थः। स्वप्नमिथ्यात्वे हेत्वन्तरमाह। यैश्चेति॥ सहदर्शिभिरगृह्यमाणत्वं स्वप्नद्रष्टुरसम्प्रतिपन्नमित्याशङ्क्याह। गृहीतश्चेदिति॥ पुरुषान्तरसंवादादर्शनात्तद्देशान्तरप्राप्तिद्वारा स्वप्नदर्शनमिति वक्तुमशक्यत्वादन्तरेव स्वप्नदर्शनमित्युचितदेशकालाद्यभावात्तन्मिथ्यात्वं सिद्धमित्युपसंहरति। तस्मादिति॥२॥

स्वप्नदृष्टानां भावानां मिथ्यात्वे हेत्वन्तरमाह। अभावश्चेति॥ न तत्र रथा न रथयोगा न पन्थानो भवन्तीत्यादिश्रुत्या स्वप्ने स्वयंज्योतिरात्मनो दर्शयन्त्या तत्र दृश्यानां रथादीनामभावो योग्यते-

वैतथ्यं तेन वै प्राप्तं स्वप्न आहुः प्रकाशितम् ॥३॥

---

न तत्र रथा इत्यत्र तेनान्तःस्थानसंवृतत्वादिहेतुना प्राप्तं वैतथ्यं तदनुवादिन्या श्रुत्या स्वप्ने स्वयं ज्योतिष्ट्वप्रतिपादनपरया प्रकाशितमाहुर्ब्रह्मविदः ॥३॥

तस्मादाद्यन्तवत्त्वेन मिथ्यैव खलु ते स्मृताः
॥ ७ ॥
अपूर्वं स्थानिधर्मो हि यथा स्वर्गनिवासिनाम्

कस्माद्यस्मात्सप्रयोजनता दृष्टा या अन्नपानादीनां सा स्वप्ने विप्रतिपद्यते । जागरिते हि भुक्त्वा पीत्वा चाप्तृप्तो विनिवर्तिततृट् सुप्तमात्र एव क्षुत्पिपासाद्यार्तमहोरात्रोषितमभुक्तवन्तमात्मानं मन्यते । यथा स्वप्ने भुक्त्वा पीत्वा चातृप्तोत्थितस्तथा । तस्माज्जाग्रद्दृश्यानां स्वप्नेऽपि विप्रतिपत्तिर्दृष्टा । अतो मन्यामहे तेषामप्यसत्त्वं स्वप्नदृश्यवदनाशङ्कनीयमिति । तस्मादाद्यन्तवत्त्वमुभयत्र समानमिति मिथ्यैव खलु ते स्मृताः ॥ ७ ॥

स्वप्नजाग्रद्दृश्ययोः समत्वाज्जाग्रद्भेदानामसत्त्वमिति यदुक्तं तदसत् । कस्मात् । दृष्टान्तस्यासिद्धत्वात् । कथं

दिति ॥ हेतोः सोपाधिकत्वं दूषयति । नत्विति ॥ साधनव्याप्त्यादिदोषाहते सोपाधिनिरसनं साधकमित्याशङ्क्याह । कस्मादिति ॥ फलपर्यन्तताविरहितोपाधेः साधनव्याप्तिमाह । यस्मादित्यादिना ॥ तामेव विप्रतिपत्तिं प्रकटयति । जागरिते हीति ॥ उक्तमर्थं दृष्टान्तेन स्फुटयति । यथेत्यादिना ॥ उपाधेः साधनव्याप्तिं निगमयति । तस्मादिति ॥ हेतोः सोपाधिकत्वाभावे फलितमाह । अत इति ॥ हेतुद्वयमुपसंहरति तस्मादिति ॥ ७ ॥

दृष्टान्तस्य साध्यविकलत्वं शङ्कित्वा परिहरति । अपूर्वमिति ॥ यथा स्वर्गनिवसनशीलानामिन्द्रादीनां सहस्राक्षत्वादिधर्मस्तथा यदिदमपूर्वं स्वप्नदर्शनं मन्यसे तदपि स्थानिनः स्वप्नस्थानवतो द्रष्टुरेव धर्मः । तेन दृष्टान्तस्य मिथ्यात्वसिद्धिरित्यर्थः । कथं तर्हि दृष्टत्वं तत्राह ।

तानयं प्रेक्षते गत्वा यथैवेह सुशिक्षितः ॥ ८ ॥

---

नहि जाग्रद्दृष्टा एवैते भेदाः स्वप्ने दृश्यन्ते किन्तर्हि अपूर्वं स्वप्ने पश्यति चतुर्दन्तगजमारूढमष्टभुजमात्मानं मन्यते । अन्यदप्येवंप्रकारमपूर्वं पश्यति स्वप्ने । तन्नान्येनासतासममिति सदेवतो दृष्टान्तोऽसिद्धस्तस्मात्स्वप्नवज्जागरितस्यासत्त्वमित्ययुक्तम् । तन्न स्वप्ने दृष्टमपूर्वं यन्मन्यसे न तत्स्वतः सिद्धम् । किन्तर्हि अपूर्वं स्थानिधर्मो हि स्थानिनो द्रष्टुरेव हि स्वप्नस्थानवतो धर्मः । यथा स्वर्गनिवासिनामिन्द्रादीनां सहस्राक्षत्वादि तथा स्वप्नदृशोऽपूर्वोऽयं धर्मः । न स्वतः सिद्धो द्रष्टुः स्वरूपवत् । तानेवं प्रकारानपूर्वान् स्वचित्तविकल्पानयं स्थानी स्वप्नदृक् स्वप्नस्थानं गत्वा प्रेक्षते । यथैवेह लोके सुशिक्षितो देशान्तरमार्गस्तेन मार्गेण देशान्तरं गत्वा तान् पदार्थान् पश्यति तद्वत् । तस्माद्यथा स्थानिधर्माणां रज्जुसर्पमृगतृष्णिकादीनामसत्त्वं तथा स्वप्नदृश्यानामपूर्वाणां स्थानिधर्मत्वमेवेत्यसत्त्वम् । अतो न स्वप्नदृष्टान्तस्यासिद्धत्वम् ॥८॥

---

तानयमिति । यथैवेह व्यवहारभूमौ सुशिक्षितो देशान्तरस्याभिमार्गेण मार्गेण देशान्तरं गत्वा तत्रत्यान् पदार्थान् वीक्षते तथायं स्वप्नगतान् पदार्थान् यथोक्तप्रकारान् प्रतिपद्यते । ततश्च स्वप्नस्य स्थानिधर्मत्वाद्रज्जुसर्पादिवन्मिथ्यात्वमित्यर्थः । शङ्कोत्तरभाष्यद्वयमुपन्यस्यति । स्वप्न इति । समत्वमाद्यन्तवत्त्वादि । अनुमानसिद्धस्यार्थस्यानुमानैर्दोषोक्तिमन्तरेणासत्त्वमयुक्तमिति इच्छति । कस्मादिति । व्याप्तिभूमिं दूषयन् व्याप्तिभङ्गं दोषमाह । दृष्टान्तस्येति । असिद्धत्वं प्रश्नपूर्वकं विघटयति । कथमित्यादिना । अपूर्वं दर्शनमेव विवृणोति ।

**स्वप्नवृत्तावपि त्वन्तश्चेतसा कल्पितन्त्वसत् ।**
**बहिश्चेतोगृहीतं सद्दृष्टं वैतथ्यमेतयोः ॥८॥**

अपूर्वत्वाशङ्कां निराकृत्य स्वप्नदृष्टान्तस्य पुनः स्वप्नतुल्यतां जाग्रद्भेदानां प्रपञ्चयन्नाह। स्वप्नवृत्तावपि स्वप्नस्थानेऽप्यन्तश्चेतसा मनोरथसङ्कल्पितमसत् सङ्कल्पानन्तरसमकालमेवादर्शनात्तत्रैव स्वप्ने बहिश्चेतसा गृहीतं चक्षुरादिद्वारेणोपलब्धं घटादि सदित्येवमसत्यमिति निश्चितेऽपि सदसद्विभागो दृष्टः। उभयोरप्यन्तर्बहिश्चेतःकल्पितयोर्वैतथ्यमेव दृष्टम् ॥८॥

---

असद्वन्तमिति। अन्यदपि विनैवत्वादिदृष्टान्तस्य साध्यविकलत्वे सिद्धे प्रागुक्तानुमानानुपपत्तिरिति फलितमाह। तस्मादिति॥ दृष्टान्तासिद्धिं दूषयन्ननुमानं साधयति। तस्येति॥ तत्किं स्वभावतः सिद्धं परतो वा। नाद्य। जडस्य तदयोगादित्याह। न तदिति॥ द्वितीये तन्मिथ्यात्वमित्यभिप्रेत्य प्रश्नपूर्वकमाद्यपादमवतारयति। किन्तर्हीति॥ तद्गतान्यक्षराणि व्याकरोति। स्थानिन इति॥ अपूर्वस्वप्नदर्शनस्य स्थानिधर्मत्वं दृष्टान्तेन साधयति। यथेत्यादिना॥ अपूर्वदर्शनं स्वप्नद्रष्टृधर्मोऽपि चैतन्यवत् किं न स्यादित्याशङ्क्य बाधोपलब्धेर्मैवमित्याह। न स्वत इति॥ उत्तरार्द्धं विभजते। तानित्यादिना॥ अपूर्वाणां स्वप्नदृश्यानां स्थानिधर्मत्वेऽपि किमायातमित्याशङ्क्याह। तस्मादिति॥ स्वप्नदृष्टान्तस्य साध्यविकलत्वाभावं निगमयति। अतो नेति॥ यदपूर्वस्यानपूर्वस्य वा स्वप्नद्रष्टृधर्मत्वेन तदविद्याविलसितमित्याह दृष्टान्ते साध्यसम्प्रतिपत्तेस्तथैव जाग्रद्भेदानां मिथ्यात्वं युक्तमित्यर्थः ॥८॥

जाग्रद्दृश्यानां मिथ्यात्वं तेषु सदसद्विभागप्रतिभागविरुद्धमित्याशङ्क्य दृष्टान्तेन समाधत्ते। स्वप्नवृत्ताविति॥ श्लोकस्य तात्पर्यार्थमाह। अपूर्वत्वेति॥ स्वप्नदृष्टान्तस्यापूर्वदर्शनत्वप्रयुक्तां साध्यविकलत्वशङ्कां

जाग्रद्वृत्तावपि त्वन्तश्चेतसा कल्पितं त्वसत्
बहिश्चेतो गृहीतं सद्युक्तं वैतथ्यमेतयोः ॥१०॥
उभयोरपि वैतथ्यं भेदानां स्थानयोर्यदि
क एतान् बुध्यते भेदान् को वै तेषां विक-
ल्पकः ॥ ११ ॥

---

सदसतोर्वैतथ्यं युक्तम् । अन्तर्बहिश्चेत कल्पितत्वा-
विशेषादिति व्याख्यातमन्यत् ॥१०॥

चोदक आह । स्वप्नजाग्रत्स्थानयोर्भेदाना यदि वैतथ्य
क एतानन्तर्बहिश्चेत कल्पितान् बुध्यते । को वै तेषा
विकल्पक । स्मृतिज्ञानयो क आलम्बनमित्यभिप्राय ।
न चेन्निरात्मवाद इष्ट ॥११॥

कल्पयत्यात्मनात्मानमात्मा देवः स्वमायया ।
स एव बुध्यते भेदानिति वेदान्तनिश्चयः॥१२॥

---

स्वयं स्वमायया स्वमात्मानमात्मा देव आत्मन्येव वक्ष्यमाणं भेदाकारं कल्पयति रज्ज्वादाविव सर्पादीन् । स्वयमेव च तान् बुध्यते भेदान् तद्वदेवेत्येवं वेदान्तनिश्चयः ॥ नान्योऽस्ति ज्ञानस्मृत्याश्रयः । न च निरास्पदे एव ज्ञानस्मृती वैनाशिकानामिवेत्यभिप्रायः ॥१२॥

---

र्थापत्तिविरोधं स्फोरयति । उभे इति ॥ चतुर्थपादमवतार्यार्थान्तर-न्तरविरोधं स्फुटयति । को वै तेषामिति ॥ कर्ता हि पूर्वानुभूतं स्मृत्वा तज्जातीयान् निर्मिमीतेऽनुभूयमनुभवान्तरापेक्षः कर्तापि चापेक्षितस्तथा च कर्त्रादिव्यवहारानुपपत्तिः सर्वमिथ्यात्वे दुर्वारेत्यर्थः ॥ योऽध्यात्मं प्रमाता यश्चाधिदैवं कर्त्तेश्वरस्तावु भावपि मिथ्येत्यङ्गीकारात् प्रमात्रादेरपत्यमिथ्यात्वमाह । न चेदिति ॥ यदि प्रमाता कर्ता वा नेष्यते तर्हि नैरात्म्यमिष्टमेवापद्यते । न च तद्युक्तं शक्यते धात्मनि रूपस्य दुष्करत्वान्निराकर्तुं देवात्मत्वादित्यर्थः ॥११॥

कर्तृकार्यादिव्यवस्थानुपपत्तिं परिहरति । कल्पयतीति ॥ कर्त्तन्तरं व्यवच्छिनत्ति । आत्मनेति ॥ कर्मान्तरं व्यावर्त्तयति । आत्मानमिति ॥ कर्त्रन्तरं निवारयति । आत्मेति ॥ तस्य द्योतकान्तरापेक्षां प्रतिक्षिपति । देव इति ॥ विवर्त्तवादं द्योतयति । स्वमाययेति ॥ सर्वस्य मिथ्यात्वेऽपि मायया विकल्पितभेदानुरोधेन कर्तृत्वादिव्यवहारस्य सिद्ध्यतीति भावः । प्रमातृप्रमाणादिव्यवहारानुपपत्तिं प्रत्याह । स एवेति ॥ एकस्मिन्नेवाद्वितीये प्रतीचि वस्तुनि काल्पनिकभेदनिबन्धना सर्वे व्यवस्थेत्यत्र प्रमाणमाह । इति वेदान्तेति ॥ यथा घटस्वरूपं कुलालोऽधिष्ठाता घटोऽन्यो दृष्टो न तथेहान्योऽधिष्ठातास्तीत्याह । स्वयमिति ॥ यथा तत्र घटाख्यमुपादानमधिष्ठातुरन्यदभिमतं

चित्तकाला हि येऽन्तस्तु द्वयकालाश्च ये

---

स्वप्नवच्चित्तपरिकल्पितं सर्व्वमित्येतदाशङ्क्यते । यस्माच्चित्तपरिकल्पितैर्मनोरथादिलक्षणैश्चित्तपरिच्छेद्यैर्वैलक्षण्यं बाह्यानामन्योन्यपरिच्छेद्यत्वमिति सा न युक्ताऽऽश-

---

यानिति यावत् । चित्तमध्ये वासनारूपेण व्यवस्थितानभिव्यक्तनामरूपत्वेन व्यवहारायोग्यत्वमाह । अव्याकृतानिति च कल्पनाकालात् प्राग्घटादीन् स्थितानित्यर्थः । बहिश्चित्तो बहिर्मुखान् बाह्यान् व्यवहारयोग्यान् पदार्थान् कल्पयति । अन्तश्चित्तस्तु तेभ्यो व्यावर्त्य बुद्धिर्मनोरथादिलक्षणानात्मन्यवस्थितान् भावान् व्यवहारयोग्यान् कल्पयित्वा पुनर्व्यवहारयोग्यतायै कल्पयतीत्यर्थः । एतदुक्तं भवति । यथा लोके कुलालो वा तन्तुवायो वा घटं पटं वा कार्यं चिकीर्षुरादौ व्यवहारयोग्याभिव्यक्तिं बुद्ध्या चाऽऽविर्भाव्य पश्चात्तामेव बहिर्नामरूपाभ्यां सम्पादयति । तथैवायमादिकर्त्तापि मायालक्षणे स्वचित्ते नामरूपाभ्यामव्यक्तरूपेण स्थितान् प्रपञ्चपदार्थान् प्रथमं विकल्पिताकारेणाविर्भाव्य पश्चाद्बहिः सर्व्वप्रतिपत्तिसाधारणरूपेण सम्पादयतीति कल्पनायाः क्रमाधिगतिरिति ॥१३॥

कल्पनायाः कल्पनाकालादन्यस्मिन् काले सत्त्वाभावाज्जाग्रद्भावानाञ्च, कल्पनाकालात् कालान्तरेऽपि प्रत्यभिज्ञया सत्त्वावगमादनुपपन्नं तेषां मिथ्यात्वमित्याशङ्क्याह । चित्तेति ॥ ये कल्पना कालभाविनोऽन्तः मनस्यन्तर्वर्त्तन्ते । ये च प्रत्यभिज्ञायमानत्वेन पूर्व्वापरकालभाविनो बहिरेव व्यवहारयोग्या दृश्यन्ते ते सर्वे कल्पिताः सन्तो मिथ्यैव भवितुमर्हन्ति । प्रत्यभिज्ञायमानत्वलक्षणो विशेषस्तु नाकल्पितत्वप्रयुक्तः कल्पितेऽपि तद्दर्शनादित्यर्थः । श्लोकव्यावर्त्त्यामाशङ्कां दर्शयति । स्वप्नवदिति ॥ यथा स्वप्ने दृश्यमानं सर्वं कल्पितं मिथ्यैवेष्यते । तथा जागरितेऽपि दृष्टं सर्वं चित्तस्पन्दितं तेन कल्पितं मिथ्यैवेत्येतच्चाद्यापि

अव्यक्ता एव येऽन्तस्तु स्फुटा एव च ये बहिः।

---

कल्पिता एव ते सर्वे न बाह्यो कालद्वयत्वविशेषः कल्पितत्वव्यतिरेकेणान्यहेतुकः। अत्रापि हि स्वप्नदृष्टान्तो भवत्येव॥१४॥

यदप्यन्तरव्यक्तत्वं भावानां मनोवासनामात्राभिव्यक्तानां स्फुटत्वं वा बहिश्चक्षुरादीन्द्रियान्तरे विशेषः। नासौ

---

निवर्तयतीत्यनेककालावस्थायित्वेन प्रत्यभिज्ञाविषयत्वं तस्य दर्शयति। यावदिति। यावता कालेनायं घटोऽर्थक्रियां निर्वर्तयितुं शक्नोति तावता कालेनावच्छिन्नः सन्नेव तिष्ठतीत्युदाहरणान्तरमाह। तावानिति। पटोऽप्यवस्थितो यावता कालेनावच्छिन्नः स्वकार्यं निर्वर्तयितुं योग्यस्तावता कालेनावच्छिन्नः तिष्ठतीत्यपरमुदाहरणमाह। एतावानिति। उक्तेन न्यायेन परेणापरेण च कालेन परिच्छेद्यत्वं जाग्रद्दृश्यानां भावानामुपगम्यते कालद्वयस्य च परिच्छेदकत्वम्। तथा ते सर्वे भावा बहिर्दृश्यमानाद्वयकालेन कालद्वयेन परिच्छिन्ना भवन्तीत्यर्थः। तृतीयपादं व्याचष्टे। अन्तरिति। चतुर्थपादार्थमाह। अनेनेत्यादिना। बाह्यो जाग्रद्दृश्येषु बाह्यपदार्थेषु व्यवस्थितो कालद्वयत्वेन कालद्वयावच्छेदेन तत्र प्रत्यभिज्ञायमानत्वरूपो विशेषोऽन्यहेतुको न भवति। कल्पितेऽपि तथाविधविशेषसम्भवादित्यत्र दृष्टान्तमाह। अत्रापि हीति। यद्यपि सर्वं जाग्रद्दृश्यं कल्पितं तथापि तत्र यथोक्तो विशेषः स्फुटं दृश्यते। स्वप्ने सर्वस्य भेदजातस्य कल्पितत्वेऽपि प्रत्यभिज्ञायमानत्वाज्जागरितेऽपि तदुपपत्तेरित्यर्थः॥१४॥

स्वप्नजागरितयोरुभयोरपि मिथ्यात्वे स्फुटास्फुटावभासविभागानुपपत्तेर्नाविशेषेण मिथ्यात्वमित्याशङ्क्याह। अव्यक्ता इति। ये मनस्यन्तर्भावनारूपत्वादस्फुटा ये च मनसो बहिश्चक्षुरादिभासा स्फुटा भवन्ति ते सर्वे मनःस्पन्दनमात्रत्वेन कल्पिता मिथ्येत्यर्थः। बहिरिन्द्रियभेदनिमित्तः

वान् । बाह्यानाध्यात्मिकांश्चैव यथाविद्य-
स्तथास्मृतिः ॥१६॥

फलात्मकमहं करोमि ममसुखदुःखे इत्येवं लक्षणः ।
अनेनैवंलक्षणेन एव शुद्धे आत्मनि रज्ज्वामिव सर्पं कल्पयते पूर्वम् । ततस्तादर्थ्येन क्रियाकारकफलभेदेन प्राणादीननेकविधान् भावान् बाह्यानाध्यात्मिकांश्चैव कल्पयते। तत्र कल्पनायां को हेतुरित्युच्यते । योऽसौ स्वयं कल्पितो जीवः सर्वकल्पनायामधिकृतः स यथाविद्यो यादृशी विद्या विज्ञानमस्येति यथाविद्यस्तथाविधैव स्मृतिस्तस्येति तथास्मृतिर्भवति स इति । अतो हेतुकल्पनाविज्ञानात्फल-

भावान् निर्मिमीते । ज्ञानस्मृतिवैचित्र्यात्तत्कल्प्येषु भावेषु वैचित्र्योपपत्तिरित्यर्थः । श्लोकस्यार्थं प्रपञ्चयति । बाह्यानि । पदार्थाः साध्यसाधनतया स्थिता बाह्याः सुखदुःखज्ञानरागद्वेषप्रभृतय आध्यात्मिकास्तेषां परस्परं निमित्तनैमित्तिकतास्ति । बाह्यान्निमित्तीकृत्याध्यात्मिका भवन्ति । तान्यपि निमित्तीकृत्येतरे जायन्ते । तदेवमितरेतरनिमित्ततया नैमित्तिकतया च कल्पनायां मूलं वक्तव्यं । निर्मूलकल्पनायामतिप्रसङ्गादित्यर्थः । श्लोकाक्षरयोजनया परिहरति । उच्यत इति । हेतुफलात्मकमित्युक्तमेव व्यनक्ति । करोमीति । हेतुफलभावविकलं परिशुद्धात्मरूपं जीवकल्पनाधिष्ठानं दर्शयति । अनेनेति । आरोपस्याधिष्ठानाभेदावभासित्वे दृष्टान्तमाह । रज्ज्वामिवेति । द्वितीयतृतीयपादौ विभजते । तत इति । तादर्थ्येन प्रथमकल्पितस्य भोक्तुर्जीवस्य प्रयुक्तत्वेनेत्यर्थः । यद्यपि जीवः सर्वकल्पनायां मूलभूतो हेतुस्तथापि तस्य कल्पनाविषये विशेषहेतुर्व्यतिरेकेण न सम्भ-

ल्पिता। सर्पधारादिभिर्भावैस्तद्वदात्मा विकल्पितः॥१७॥

श्चयनिमित्तम्। यदि हि पूर्व्वमेव रज्जुः स्वरूपेण निश्चिता स्यात् न सर्पादिविकल्पोऽभविष्यत्। स यथा स्वरूपाद्गु-ण्यादिषु एष दृष्टान्तस्तद्धेतुफलादिसंसारधर्म्मानर्थविल-क्षणतया स्वेन विशुद्धविज्ञप्तिमात्रसत्ताद्वयरूपेणानिश्चि-तत्वाज्जीवप्राणाद्यनन्तभावभेदैरात्मा विकल्पित इत्येष सर्व्वोपनिषदां सिद्धान्तः ॥१७॥

---

इदानीं जीवकल्पनानिमित्तं निरूपयति। अनिश्चितेति। श्लोकस्य तात्पर्यं दर्शयितुं वृत्तं कीर्त्तयति। सर्वेति। पूर्वश्लोकसमन्वयार्थं। जीवकल्पनाया निमित्तायोगात् अनिमित्तत्वस्य वक्तव्यत्वात् तस्य च अवस्तुत्वे निवृत्त्यनुपपत्तेः। अवस्तुत्वे च निमित्ताभिद्धेर्जीवकल्पनाया दुर्घटत्वात्तत्कार्य्यभूतापि कल्पना नावकल्पत इत्याशङ्क्य। सैवेति। उत्तरत्वेन श्लोकमवतार्य्य व्याचष्टे। दृष्टान्तेनेति। स्वरूपा धारण रूप रज्जुत्व तेनेति यावत्। अनवधारितत्वमेव स्फोरयति। एवमेवेति। रज्जुरेवेयमित्यनेन प्रकारेणेत्यर्थः। सर्पादिकल्पनायामन्वयव्यतिरेकसिद्धमुपादानमुपन्यस्यति। स्वरूपेणेति। स्वरूपावधारणराहित्ये कारणं सूचयति। मन्देति। पूर्वं रज्जुस्वरूपनिश्चयतयाद्भागवस्थायामित्यर्थः। एतदेव व्यतिरेकद्वारा विवृणोति। यदि हीति। देवदत्तस्य हस्ताद्यवयवेषु तद्रूपेणैव निश्चितेषु सर्पादिविकल्पो यथा नोपलभ्यते तथा पुरोवर्त्तिन्यपि रज्जुस्वरूपेण निश्चितेनासौ युक्तस्तथा च रज्जुज्ञानादेव भवतीत्यर्थः। उपमानादिकं दृष्टान्तमनूद्य दार्ष्टान्तिकमभिसन्धायानन्तरपादार्थमाह। एष इति। हेतुफलादित्यादिशब्देन कर्त्तृत्वभोक्तृत्वरागद्वेषादि गृह्यते। विलक्षणत्वमेव स्फुटयति।

लोका इति लोकविदो देवा इति च तद्विदः॥२१॥
वेदा इति च वेदविदो यज्ञा इति च तद्विदः । भोक्तेति च भोक्तृविदो भोज्यमिति च तद्विदः॥२२ ॥

---

भेदा रज्ज्वामिव सर्पादयः । तच्छून्ये आत्मन्यात्मस्वरूपा

---

नरगतो वर्णस्यारोप्यते। तथा च तथाविधक्रमवता वर्णानामारोपित रूपेण वेदशब्दवाच्यत्वात्क्रमो वेदानां परमार्थतेत्याह। वेदा इति ॥ ज्योतिष्टोमादयो यज्ञा वस्तुभूता भवन्तीति बौधायनप्रभृतयो याज्ञिका मन्यन्ते तदपि भ्रान्तिमात्रम्। यद्यं व्याख्यास्यामो द्रव्यं देवता त्याग इत्यत्रैकैकस्मिन्यज्ञविज्ञानाभावात्समुदायस्य चाव स्तुत्वादित्याह। यज्ञा इति चेति॥ भोक्तैवात्मा न कर्तेति साङ्ख्याः। तत्र भोगो यदि विक्रिया स्वीक्रियते तर्हि कथं नानित्यत्वादिप्रसङ्गः स्वभावत्वे सदा स्यादिति विषयसन्निधौ भोक्तृत्वं भ्रान्तिरेवेत्याह। भोक्तेति चेति॥ सूपकारास्तु भोज्यं वस्त्विति प्रतिजानते। तदपि न। मधुरादिरसस्य ज्ञानादेव द्वैविध्यात्तद्दर्शनादेकरूपासम्भवादित्याह। भोज्यमिति चेति ॥ २२ ॥

आत्मा सूक्ष्मोऽणुपरिमाणः स्यादिति केचित्। तन्न। युगपदशेषशरीरव्यापिवेदनानुभवानामसिद्धेरित्याह। सूक्ष्म इतीति। स्थूलो देहात्मप्रत्ययादात्मेति लोकायतभेदः। तच्च न। स्वतस्तुभयोरपि सङ्घातादिविशेषाश्चैतन्यप्रसङ्गात्। एकैकस्य च भूतस्य चैतन्यादर्शनात्सङ्घातस्य चावस्तुत्वादित्याह। स्थूल इति चेति॥ मूर्तस्त्रिगुणादिधारी ॥ ॥ वा परमार्थो भवतीत्यागमिका। तदपि भ्रान्ति वृक्षादिशरीरवत्तस्यापि शरीरस्य पाञ्चभौतिकत्वात्स्त्री- ॥ लोभाभावादनुक्तमित्याह। मूर्त इति॥

सूक्ष्म इति सूक्ष्मविदः स्थूल इति च तद्विदः॥
मूर्त्त इति मूर्त्तविदो अमूर्त्त इति च तद्विदः
॥ २३ ॥

काल इति कालविदो दिश इति च तद्विदः
वादा इति वादविदो भुवनानीति तद्विदः॥२४॥

मन इति मनोविदो बुद्धिरिति च तद्विदः।

---

निश्चयहेतोरविद्यया कल्पिता इति पिण्डीकृतोऽर्थः।

---

अमूर्त्तः सर्वाकारशून्यो निःस्वभावः परमार्थ इति शून्यवादिनः तदपि कल्पनामात्रम्। परमार्थो निःस्वभावश्चेति व्याघातादित्याह। अमूर्त्त इति चेति ॥२३॥

कालः परमार्थ इति ज्योतिर्विदः। तच्च न। कालस्य मुहूर्त्तादिव्यवहारायोगात्। तत्र नानात्वेऽपि न स्वातन्त्र्यम्। अन्यविषयत्वेन प्रतीतेः। उदयकाल इत्यादिना क्रियाधर्मत्वेन स्फुटत्वात्। न च क्रियाधर्मत्वं कालेऽपि तद्वदुपपत्तिदर्शनादन्यथाकालानवच्छिन्नत्वेन क्रियानित्यत्वापातादित्याह। काल इतीति॥ स्वरोदयविदस्तु दिशः परमार्था इत्याहुः। तदपि भ्रान्तिमात्रम्। तद्विदामपि पराजयदर्शनादित्याह। दिश इति चेति॥ धातुवादो मन्त्रवादश्चेत्यादयो वादा वस्तुभूता भवन्तीति केचित्। तदपि कल्पनामात्रम्। ताम्रादिस्वभावे स्थिते नष्टे च कनकादिस्वभावासम्भवात्। मन्त्रवादेऽपि कालदृष्टो न भवति। अकालदृष्टः स्वयमेवोत्पद्यत इत्युपशमाद्भ्रममात्रमित्याह। वादा इतीति॥ भुवनानि चतुर्दश वस्तूनीति भुवनकोशविदः। तदपि कल्पनामात्रम्। तेषामदृष्टत्वात्। न च तेभ्यस्तद्दर्शनम्। तेषां मिथो विप्रतिपत्तिदर्शनादित्याह। भुवनानीति ॥ २४ ॥

मन एवात्मेति लोकायतभेदः। तदपि भ्रान्तिमात्रम्। तस्य

चित्तमिति चित्तविदो धर्माधर्मौ च तद्विदः ॥२५॥

पञ्चविंशक इत्येके षड्विंश इति चापरे ।
एकत्रिंशक इत्याहुरनन्त इति चापरे ॥२६॥

---

प्राणादिश्लोकानां प्रत्येकं पदार्थव्याख्याने फलं प्रयोजनं-

---

ज्ञातत्वेन लोकप्रसिद्धानुपपत्तेः । अनात्मत्वे च घटवदनात्मत्वात्करण-त्वाच्च दोषवदात्मत्वायोगादित्याह । मन इति । चार्वाकैकदेशिनो बौद्धाः । तेषामपि भ्रान्तिमात्रमेव । तद्दृष्टेर्व्यभिचाराद्दृश्यत्वाच्च घटवदति-रिक्तवेद्यत्वादित्याह । बुद्धिरिति । चित्तमेव बाह्याकारशून्यं विज्ञा-नम् । तदेवात्मेत्यपरे । तत्रापि प्रागुक्तन्यायाविशेषात्तुल्यं भ्रान्तत्व-मित्याह । चित्तमिति । धर्माधर्मौ विधिनिषेधचोदनागम्यौ परमा-र्थाविति मीमांसकाः । तदपि कल्पनामात्रम् । देशकालादिना धर्मा-धर्मयोर्विप्रतिपत्तिदर्शनादित्याह । धर्मेति ॥२५॥

प्रधानं मूलप्रकृतिः । महदहङ्कारतन्मात्राणीति सप्त प्रकृतिवि-कृतयः । पञ्च ज्ञानेन्द्रियाणि । पञ्च कर्मेन्द्रियाणि । पञ्च विषयाः । मनश्चेति षोडश विकाराः । पुरुषस्तु दृशिस्वभाव इति पञ्चविं-शतिसङ्ख्याकः प्रपञ्चो वर्त्तत इति साङ्ख्याः । तच्च कल्पनामात्रम् । पञ्चविं-शतिविशेषणस्याव्यावर्त्तकत्वे वैयर्थ्यात् व्यावर्त्तकत्वे च व्यावर्त्त्यप्रसि-द्ध्यप्रसिद्ध्योरनुपपत्तेरित्याह । पञ्चविंशक इति । पातञ्जलाः पुनरीश्वर-मधिकं वदन्तः षड्विंशतिपदार्था इति विकल्पयन्ति । तदयुक्तम् । ईश्वरस्य पुरुषान्तर्भावादधिकत्वानुपपत्तेः । अनन्तर्भावे च घटवदनीश्वर-त्वप्रसङ्गादित्याह । षड्विंश इति चेति । पाशुपतास्तु रागाविद्यानिय-तिकालकलामायाधिक्यात् एकत्रिंशत्पदार्था इति मन्यते । तन्न । तेष्व-पि रागविद्ययोरन्तःकरणधर्मत्वात् कालादेरपि तद्भिन्नत्वेन कल्पिता-त्वात् तस्य रागोपहितत्वेन तस्याप्यविद्योपहितत्वेन च कल्प्यता-

लोकान् लोकविदः प्राहुराश्रमा इति तद्विदः । स्त्रीपुंनपुंसकं लैङ्गाः परापरमथापरे ॥२७॥

सृष्टिरिति सृष्टिविदो लय इति च तद्विदः ।

---

व्याख्यातो न ततः ॥२०॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥

किं बहुना प्राणादीनामन्यतममुक्तमनुक्तं वाऽन्यं यं

---

पातादविद्यामाययोरैकत्वादवान्तरभेदे च नियतावपि तद्रूपधर्मो न स्वरूपातिरिक्ततादवस्थ्यम् । कालकलासु च तत्प्रसिद्धेरित्याह । एकत्रिंशक इति । अनन्त. पदार्थभेदो न नियतोऽस्तीति केचित् तदपि न । मादिना विवाददर्शनात् । विवादस्य चाज्ञानमूलत्वादित्याह । अनन्ता इतीति ॥२६॥

लोकानुरञ्जनमेव तत्त्वमिति लौकिकाः । तदपि विभ्रममात्रम् । लोकस्य भिन्नरुचित्वात्तदनुरञ्जनस्येश्वरेणापि कर्तुमशक्यत्वादित्याह । लोकानिति । दक्षप्रभृतयस्त्वाश्रमाः परमार्था इति समर्थयन्ते तदसत् । देहस्याश्रमशब्दार्थत्वे शूद्रादेरपि प्रसङ्गाज्जातेश्च दुर्विवेचनत्वादात्मनस्त्वाश्रमस्य दर्शयितुमशक्यत्वात्संस्कारस्य च देहसमवायित्वे पारलौकिकफलायोगादसङ्गे चात्मनि तदसमवायादित्याह । आश्रमा इतीति । वैयाकरणास्तु स्त्रीपुंनपुंसकशब्दजातं तत्त्वमिति वर्णयन्ति । तदप्ययुक्तम् । स्त्र्यादेः शब्दस्वभावत्वे घटादीनां त्रिलिङ्गत्वायोगादेकस्यानेकस्वभावत्वासम्भवादौपाधिकधर्मत्वे च तस्यावस्तुत्वप्रसङ्गादित्याह । स्त्रीपुंनपुंसकमिति । द्वे ब्रह्मणी वेदितव्ये परं चापरञ्चेति केचित् । तच्च न । परिच्छेदे कस्यचिदपि ब्रह्मत्वायोगात् वस्तुतोऽपरिच्छिन्नस्य सङ्गाभावादित्याह । परापरमिति ॥२७॥

सृष्टिर्लयो वा स्थितिर्वा तत्त्वमिति पौराणिकाः । तदपि

निश्चलं निश्चरत् चित्तं एकीकुर्य्यात् प्रयत्नतः ॥४५॥
यदा न लीयते चित्तं न च विक्षिप्यते पुनः ।

कल्पितं सर्वमेवेति विभावयेत् । ततोऽपि सुखरागान्निरुन्धी-यात् इत्यर्थः । यदा पुनः सुखरागान्निवृत्तं निश्चल-स्वभावं सन्निश्चरद्बहिर्निर्गच्छद्भवति चित्तं ततस्ततो निय-म्योक्तोपायेन आत्मन्येवैकीकुर्य्यात् प्रयत्नतः । चित्स्वरूप-सत्तामात्रमेवापादयेदित्यर्थः ॥४५॥

यथोक्तेन उपायेन निगृहीतं चित्तं यदा सुषुप्ते न

---

तद्यदि स्वभावानुसारेण बहिर्निर्गन्तुमिच्छेत्तदा सम्प्रज्ञातसमाधेर-सम्प्रज्ञातसमाधिपर्य्यन्तात् प्रयत्नात् तदात्मन्येवैकीकृत्य तन्मात्रमापाद्य-परिशुद्धपरिपूर्णसच्चात्मना स्वयं तिष्ठेत् इत्याह । निश्चरदिति ॥ प्रथमपादाक्षराणि योजयति । समाधिस्थित इति ॥ तस्य समाध्य-वस्थायामिति शेषः ॥ द्वितीयपादमाकाङ्क्षाद्वारा विवृणोति । कथमि-त्यादिना ॥ निःस्पृहो यथोक्ते सुखे अनुरागरहितः सन्नित्यर्थः । विवेकरूपा बुद्धिरागन्तुकस्य रज्जुसर्पवत् कल्पितमित्येवमात्मिका तया भावये-दिति सम्बन्धः ॥ भावनाप्रकारमभिनयति । यदित्यादिना ॥ प्रथमा-र्द्धस्याक्षरार्थमुक्त्वा तात्पर्य्यार्थं निगमयति । ततोऽपीति ॥ उत्तरार्द्धं विभजते । यदेत्यादिना ॥ पूर्वोक्तसमाध्यनुरोधादात्मन्येव निश्चलस्वभावं सच्चित्तं यथोक्तं सुखरागनिमित्तं तदुपायरागनिमित्तं वा निश्चरत् भव-तीति सम्बन्धः । तच्च चित्तं बाह्यविषयाभिमुख्यादुक्तोपायेन प्राणा-यामादीना व्यावर्त्यात्मन्येव परस्मिन् ब्रह्मणि प्रयत्नतः सम्प्रज्ञात-समाधिवशादेकीकुर्य्यात् । असम्प्रज्ञातसमाधियुक्तं परिपूर्णं ब्रह्मैवापाद-येदित्यर्थः ॥ तदेव स्फुटयति । चित्स्वरूपेति ॥४५॥

कदा पुनरिदं चित्तं ब्रह्मसम्पद्यते तदाह । यदेति ॥

**अजमजेन ज्ञेयेन सर्वज्ञं परिचक्षते ॥४७॥**
**न कश्चिज्जायते जीवः सम्भवोऽस्य न विद्यते ।**

---

तच्चाकथ्यं न शक्यते कथयितुम् । अत्यन्तासाधारणविषयत्वात् । सुखमुत्तमं निरतिशयं हि तत् योगिप्रत्यक्षमेव । न जातमित्यजम् । यथा विषयम् अजेनानुत्पन्नेन ज्ञेयेनाव्यतिरिक्तं सत् स्वेन सर्वज्ञरूपेण सर्वज्ञं ब्रह्मैव सुखं परिचक्षते कथयन्ति ब्रह्मविदः ॥४७॥

सर्वोऽप्ययं मनोनिग्रहादिर्मृल्लोहादिवत्सृष्टिरुपासना चोक्ता परमार्थस्वरूपप्रतिपत्त्युपायत्वेन न परमार्थसत्येति । परमार्थसत्यं तु न कश्चित् जायते जीवः कर्त्ता भोक्ता च नोत्पद्यते केनचिदपि प्रकारेण । अतः स्वभावतोऽज-

---

त्वादपि पुरुषार्थत्वसिद्धिरित्याह । स्वस्थमिति ॥ निरतिशयानन्दात्माभिव्यक्तिनिरवद्यानवच्छिन्नचित्तवृत्तिलक्षणं मोक्षमापद्यते ॥ तत्कथमिदं मस्त्वित्याशङ्क्याह । सनिर्वाणमिति ॥ तस्य क्षीरखण्डादिमाधुर्यवदस्य स्वानुभवमात्राधिगम्यत्वादकथ्यत्वमाह । अकथ्यमिति ॥ यदुक्तं परमार्थसुखमिति तदिदानीमुपपादयति । सुखमिति ॥ तर्हि सर्वेषामेव तत् स्यादित्याशङ्क्याह । योगीति ॥ ज्ञानस्याजातत्वे वैधर्म्यदृष्टान्तमाह । यथेति ॥४७॥

उक्तानामुपायानां परमार्थसत्यत्वे अद्वैतहानिः । अन्यथा तदप्रमितिरित्याशङ्क्याह । न कश्चिदिति ॥ तत्र वृत्तमाह । सम्भवोऽस्येति ॥ श्लोकाक्षराणि व्याकर्तुं भूमिकां व्याकरोति । सर्वोऽपीति ॥ व्यवहारिकसत्यत्वमेवोपायानां न परमार्थसत्यत्वमित्यङ्गीकृत्य पारमार्थिकसत्यस्य प्रतिपत्त्युपायत्वेनैवोक्तेत्याह । सदिति ॥ यदुक्तं नन्व॰

एतत्तदुत्तमं सत्यं यत्र किञ्चिन्न जायते ॥४८॥

इति गौडपादीयकारिकायामद्वैताख्यं तृतीयं प्रकरणम् ॥ ३ ॥ ॐ तत्सत् ॥

---

स्याऽस्यैकस्य तत्र सम्भवः कारणं न विद्यते नास्ति। यस्मान्न विद्यतेऽस्य कारणं तस्मान्न कश्चिज्जायते जीव इत्येतत्। पूर्वेषूपायत्वेनोक्तानां सत्यानामेतदुत्तमं सत्यं यस्मिन् सत्यस्वरूपे ब्रह्मण्यणुमात्रमपि किञ्चिन्न जायते इति ॥४८॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्य्यस्य श्रीशङ्करभगवतः कृतौ गौडपादीयभाष्ये आगमशास्त्रविवरणेऽद्वैताख्यतृतीयप्रकरणभाष्यम् ॥३॥

ओं तत्सत् ॥

---

विषयादीनां परमार्थत्वे द्वैतप्राप्तिरिति तत्राह । नैत्यादिना । तेषाम् परमार्थत्वे कथमद्वैतप्रतिपत्तिरित्यपि न व्यवहारिकसत्याभासत्वमपि तत् प्रमितिहेतुत्वस्य प्रतिबिम्बदुपपत्तेरिति भावः । 'उपायानां' व्यवहारिकसत्यत्वेनैव पारमार्थिकसत्यत्वं किं न स्यादिति तत्राह । परमार्थेति । तदेव स्फुटयति । कस्येति । स्वभावतोऽस्य हेतुकथा व्यर्था । तदेव हेत्वन्तरमाह । यत इति । हेत्वन्तरमेव स्फुटयति । यस्मादिति । उत्तरार्द्धं व्याचष्टे । पूर्वेष्विति । पूर्वेषु पर्यायेष्विति यावत् । इतिशब्दो द्वैतप्रकरणपरिसमाप्तिं द्योतयति ॥४८॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्य भगवदानन्दज्ञानविरचितायां गौडपादभाष्यटीकायां तृतीयप्रकरणव्याख्यानम् ॥ ३ ॥ ओं तत्सत् ॥ हरिः ओं ॥

ज्ञानेनाकाशकल्पेन धर्मान् गगनोपमान्।

ओंकारनिर्णयद्वारेण आगमतः प्रतिज्ञातस्याद्वैतस्य बाह्यविषयभेदवैतथ्याच्च सिद्धस्य पुनरद्वैते शास्त्रयुक्तिभ्यां साक्षान्निर्धारितस्यैतदुत्तमं सत्यमित्युपसंहारः कृतः। अन्ते तस्यैतस्यागमार्थस्याद्वैतदर्शनस्य प्रतिपक्षभूता द्वैतिनो वैनाशिकाश्च तेषां चान्योन्यविरोधाद्रागद्वेषादिक्लेशास्पदं दर्शनमिति मिथ्यादर्शनत्वं सूचितम्। क्लेशानास्पदत्वात् सम्यग्दर्शनमित्यद्वैतदर्शनस्तुतये। तदिह विस्तरेणान्योन्यविरुद्धतया असम्यग्दर्शनत्वं प्रदर्श्य तत्प्रतिषेधेनाद्वैतदर्शनसिद्धिरुपसंहर्त्तव्या। आवीतन्यायेनेत्यलातशान्तिरारभ्यते। तत्राद्वैतदर्शनसम्प्रदायकर्त्तुरद्वैतस्वरूपेणैव नम-

---

आद्यन्तमध्यमङ्गला ग्रन्थाः प्रचारिणो भवन्तीत्यभिप्रेत्यादावोङ्कारोच्चारणवदन्ते परदेवताप्रणामवत् मध्येऽपि परदेवतारूपमुपदेष्टारं प्रणमति। ज्ञानेति॥ पूर्वोत्तरप्रकरणसम्बन्धसिद्ध्यर्थं पूर्वप्रकरणत्रये वृत्तमर्थं क्रमादनुद्रवति। ओंकारेति॥ अद्वैत इत्यद्वैतोपलक्षितं तृतीयं प्रकरणमुच्यते। चतुर्थं प्रकरणमवतारयितुमुपयुक्तमर्थान्तरमनुवदति। तस्येति॥ द्वैतिनो भेदवादिनो वैनाशिकव्यतिरिक्ता वक्ष्यन्ते वैनाशिका नैरात्म्यवादिनो रागद्वेषादीत्यादिशब्देनातिरिक्तक्लेशोपादानम्। पक्षान्तराणां मिथ्यादर्शनत्वसूचनं कुत्रोपलभ्यते तत्राह। क्लेशेति॥ प्रातिभासिकमिव कृत्वा अनन्तरप्रकरणप्रवृत्तिं प्रतिजानीते। तदिहेति॥ तदसम्यग्दर्शनत्वमिति सम्बन्धः। आवीतन्यायो व्यतिरेकन्यायः। यथा यत्कृतकं तदनित्यमित्यन्वयादनित्यत्वगतेऽपि यन्नानित्यं न तत्कृतकमिति व्यतिरेकोऽपि व्यभिचार

अस्पर्शयोगो वै नाम सर्व्वसत्त्वसुखो हितः।

प्रधानं पुरुषोत्तममित्यभिप्रायः। उपदेष्टृनमस्कारमुखेन ज्ञानज्ञेयज्ञातृभेदरहितं परमार्थतत्त्वदर्शनमिह प्रकरणे प्रतिपिपादयिषितं प्रतिपक्षप्रतिषेधद्वारेण प्रतिज्ञातं भवति ॥१॥

अधुनाऽद्वैतदर्शनयोगस्य नमस्कारस्तत्स्तुतये, स्पर्शनं स्पर्शः सम्बन्धो न विद्यते यस्य योगस्य केनचित्कदाचिदपि सोऽस्पर्शयोगो ब्रह्मस्वभाव एव वै नामेति। ब्रह्मविदामस्पर्शयोग इत्येवं प्रसिद्ध इत्यर्थः। स च सर्व्वसत्त्वसुखो भवति। कश्चिदत्यन्तसुखसाधनविशिष्टोऽपि दुःखस्वरूपः यथा तपः अयन्तु न तथा किन्तर्हि सर्व्वसत्त्वानां सुखः।

श्रमे नरनारायणाधिष्ठिते नारायणं भगवन्तमभिप्रेत्य तपो महदतप्यत। ततो भगवानतिप्रसन्नस्तस्मै विद्यां प्रददाविति प्रसिद्धं परमगुरुत्वं परमेश्वरे इति भावः। ननु प्रकरणे प्रारभ्यमाणे प्रतिपाद्ये प्रमेये वक्तव्ये किमित्युपदेष्टा नमस्क्रियते तत्राह। उपदेष्टृति ॥१॥

इदानीमद्वैतदर्शनयोगस्तुतये तन्नमस्कारं प्रस्तौति। अस्पर्शेति। श्लोकस्य तात्पर्यमाह। अधुनेति। तस्य च स्तुतिः तत्साधनेषु प्रवृत्त्यर्थमुपयुज्यते। सम्प्रत्यक्षराणि [illegible] अस्पर्शयोगशब्दं व्याकरोति। अस्पर्शनमिति। योगस्यात्मसम्बन्धप्रसङ्गाभावात् कथमस्पर्शत्वमित्याशङ्क्याह। ब्रह्मेति। निपातयोरर्थं कथयति। वै नामेति। सर्वेषां प्राणिनां देहभृतां सुखयतीति व्युत्पत्त्या सुखहेतुत्वं ब्रह्मस्वभावस्य सुखविशेषणेन दर्शयति। स चेति। सुखहेतावपि ब्रह्मस्वभावे विपश्चितां विशेषं दर्शयति। भवतीति। हितविशेषणस्य तात्पर्यमाह। तथेह भवतीत्यादिना। तस्य हितत्वे हेतुमाह।

न भवत्यमृतं मर्त्यं न मर्त्यममृतं तथा ।
प्रकृतेरन्यथाभावो न कथञ्चिद्भविष्यति ॥७॥
स्वभावेनामृतो यस्य धर्मो गच्छति मर्त्यताम् ।
कृतकेनामृतस्तस्य कथं स्थास्यति निश्चलः ॥८॥
सांसिद्धिकी स्वाभाविकी सहजा अकृता च या ।

---

उक्तार्थानां श्लोकानामिहोपन्यासः परवादिपक्षाणामन्योन्यविरोधख्यापितानुमोदनप्रदर्शनार्थः ॥७।८॥

यस्माल्लौकिक्यपि प्रकृतिर्न विपर्येति काऽसावित्याह सम्यक्सिद्धिः संसिद्धिस्तत्र भवा सांसिद्धिकी यथा योगिनां सिद्धानामणिमाद्यैश्वर्यप्राप्तिः प्रकृतिः सा भूतभविष्यत्-

---

परिणामिब्रह्मवादे यदजस्रमर्त्यादिभिर्दूषणमुच्यते तदप्यनुमतमेवेति मत्वाह । न भवतीति ॥ अमृतं हि ब्रह्म न तद्रूपे स्थिते मर्त्यभवितुमर्हति । स्थितरूपविरोधात् । न च मर्त्यं कार्यं स्वरूपे स्थिते प्रलयावस्थायाममृतं ब्रह्म सम्पद्यते । नष्टेऽपि स्वरूपे तस्यैवाभावान्नान्यथात्वमित्यभिप्रेत्याह । प्रकृतेरिति ॥ किञ्च यस्य परिणामवादिनः स्वभावेनामृतः सन् परमात्माख्यो धर्मोऽद्वितीयो भावो मर्त्यतां कार्यभावावस्थां गच्छति । तस्य कृते केन मुमुक्षयाऽनुष्ठानेनाऽमृतो जातो मुक्तो वक्तव्य । स च कथं निश्चलः स्यादिति पारयति । यत्कृतकं तदनित्यमिति न्यायविरोधादित्याह । स्वभावेनेति ॥ पुनरुक्तिमाशङ्क्य प्रत्यादिशति । उक्तार्थानामिति ॥७।८॥

प्रकृतेरन्यथाभावो न कथञ्चिदित्युक्तं तत्र प्रकृतिशब्दार्थं कथयति । सांसिद्धिकीति ॥ श्लोकाक्षराणि व्याकुर्वन् प्रकृतेरन्यथात्वाभावे हेतुमाह । यस्मादिति ॥ तस्मादमृतस्वभावा प्रकृतिर्न विपर्येतीति

न भवत्यमृतं मर्त्यं न मर्त्यममृतं तथा ।
प्रकृतेरन्यथाभावो न कथञ्चिद्भविष्यति ॥७॥
स्वभावेनामृतो यस्य धर्मो गच्छति मर्त्यताम् ।
कृतकेनामृतस्तस्य कथं स्थास्यति निश्चलः ॥८॥
सांसिद्धिकी स्वाभाविकी सहजा अकृता च या ।

---

उक्तार्थानां श्लोकानामिहोपन्यासः परवादिपक्षाणामन्योन्यविरोधख्यापितानुमोदनप्रदर्शनार्थः ॥७॥८॥

यस्माल्लौकिक्यपि प्रकृतिर्न विपर्येति कासावित्याह सम्यक्सिद्धिः संसिद्धिस्तत्र भवा सांसिद्धिकी यथा योगिनां सिद्धानामणिमाद्यैश्वर्यप्राप्तिः प्रकृतिः सा भूतभविष्यत्-

---

परिणामिब्रह्मवादे यदमृतब्रह्मवादिभिर्दूषणमुच्यते तदप्यनुमतमेवेति मत्वाह । न भवतीति ॥ अमृतं हि ब्रह्म न तद्रूपेण स्थितं मर्त्यभावमर्हति । स्थितरूपविरोधात् । न च मर्त्यं कार्यं स्वरूपे स्थितं प्रलयावस्थायाममृतं ब्रह्म सम्पद्यते । नष्टेऽपि स्वरूपे तस्यैव भावाद्वान्यथात्वमित्यभिप्रेत्याह । प्रकृतेरिति ॥ किञ्च यस्य परिणामवादिनः स्वभावेनामृतं सत् परमात्माख्यो धर्मशब्दितो भावो मर्त्यतां कार्यभावमापद्य गच्छति । तस्य कृतकेन समुच्चयानुष्ठानेनामृतो जातो मुक्तो वक्तव्यः । स च कथं निश्चलः स्थास्यति । यत्कृतकं तदनित्यमिति न्यायविरोधादित्याह । स्वभावेनेति ॥ पुनरुक्तिमाशङ्क्य प्रत्यादिशति । उक्तार्थानामिति ॥७।८॥

प्रकृतेरन्यथाभावो न कथञ्चिदित्युक्ते तत्र प्रकृतिशब्दार्थं कथयति । सांसिद्धिकीति ॥ श्लोकाक्षराणि व्याकुर्वन् प्रकृतेरन्यथात्वभावे हेतुमाह । यस्मादिति ॥ तस्मादजामृतस्वभावा प्रकृतिर्न विपर्येतीति

प्रकृतिः सेति विज्ञेया स्वभावं न जहाति या॥९॥
जरामरणनिर्मुक्ताः सर्वे धर्माः स्वभावतः।

कालत्रयेऽपि योगिनां न विपर्येति तथैव सा। यथा स्वाभाविकी द्रव्यस्वभावत एव सिद्धा। यथाऽग्न्यादीनामुष्णप्रकाशादिलक्षणा सापि न कालान्तरे व्यभिचरति देशान्तरे च तथा सहजा आत्मना सहैव जाता यथा पक्ष्यादीनामाकाशगमनादिलक्षणा। अन्यापि या काचिदकृता केनचिन्न कृता यथाऽपां निम्नदेशगमनादिलक्षणा। अन्यापि या काचित्स्वभावं न जहाति सा सर्वा प्रकृतिरिति विज्ञेया। लोके मिथ्याकल्पितेषु लौकिकेष्वपि वस्तुषु प्रकृतिर्नान्यथा भवति किमुताजस्वभावेषु परमार्थवस्तुष्वमृतत्वलक्षणा प्रकृतिर्नान्यथा भवतीत्यभिप्रायः॥९॥

किंविषया पुनः सा प्रकृतिर्यस्या अन्यथाभावो

किमु वक्तव्यमिति योजना। कैमुतिकन्यायद्योतनार्थो पिशब्दः। विव क्षितं हेतुं स्फुटयितुं प्रश्नपूर्वकं विभजते। कायादित्यादिना। सांसिद्धिकीं योगसमृद्धाव परिनिष्पन्ना सिद्धिः। सिद्धानामणिमाद्यैश्वर्यप्राप्तौ सामग्रीसम्पन्नानां या काचित् स्वभावाद्य जहाति घटस्य घटत्वं पटस्य पटत्वमित्यादिकेति यावत्। सांसिद्धिक प्रकृतिशब्दार्थमुक्त्वा प्रकृतेरन्यथा [illegible] मिच्यति ॥९॥

सांसिद्धिकीमिव जीवानां प्रकृतिं दर्शयितुं प्रक्रमते। जरेति॥

जरामरणमिच्छन्तश्च्यवन्ते तन्मनीषया॥१०॥
कारणं यस्य वै कार्यं कारणं तस्य जायते।

वादिभिः कल्प्यते कल्पनायां वा को दोष इत्याह। जरामरणनिर्मुक्ताः। जरामरणादिसर्वविक्रियावर्जिता इत्यर्थः। के? सर्वे धर्माः सर्व आत्मान इत्येतत् स्वभावतः प्रकृतितः। एवं स्वभावाः सन्तो धर्मा जरामरणमिच्छन्त इवेच्छन्तो रज्ज्वामिव सर्पमात्मनि कल्पयन्तश्च्यवन्ते स्वभावतश्चलन्तीत्यर्थः। तन्मनीषया जन्ममरणचिन्तया तद्भावभावितत्वदोषेणेत्यर्थः॥१०॥

कथं सज्जातिवादिभिः साङ्ख्यैरनुपपन्नमुच्यत इत्याह वैशेषिकः। कारणं मृद्वदुपादानलक्षणं यस्य वादिनो वै कार्यं कारणमेव कार्याकारेण परिणमते यस्य वादिन

आत्मानो हि सर्वविक्रियारहिताः स्वभावतो भवन्तीत्यर्थः। तेषामुक्तप्रकृतेरन्यथात्वे का क्षतिरित्याशङ्क्याह। जरामरणमिति। सर्वविक्रियाशून्ये ह्यात्मनि विक्रियाकल्पनायां तद्भावनया स्वभावहानिः स्यादित्यर्थः। श्लोकाक्षराणि व्याकर्तुं शङ्काद्वारं दर्शयति। किंविषयेति। आश्रयविषयो विषयशब्दः। अप्रकृतं प्रकृतेरन्यथात्वमित्याशङ्क्याह। यस्मा इति। पश्चार्धं प्रकरोति। कल्पनायामिति। तत्र पूर्वार्धमुत्तरत्वेन व्याकरोति। आत्मान इत्यादिना। उत्तरार्धं विभजते। एवं स्वभावा इति॥ [illegible]

प्रासङ्गिकं परित्यज्य साङ्ख्यपक्षे वैशेषिकादिभिरुच्यमानं दूषणमभ्युपगतमनुभाषते। कारणमिति। कारणस्य जायमानत्वे का हानिरित्याशङ्क्याह। जायमानमिति। साङ्ख्यैरपि प्रधानस्य नित्य-

अशक्तिरपरिज्ञानं क्रमकोपोऽथ वा पुनः ।
एवं हि सर्वथा बुद्धैरजातिः परिदीपिता ॥१९॥

---

अथैतन्न शक्यते वक्तुमिति मन्यसे सेयमशक्तिरपरिज्ञानम्। तत्त्वाविवेको मूढतेत्यर्थः। अथ वा योऽयं त्वयोक्तः क्रमः हेतोः फलस्य सिद्धिः फलाच्च हेतोः सिद्धिरितीतरेतरानन्तर्यलक्षणस्तस्य कोपो विपर्यासोऽन्यथाभावः स्यादित्यभिप्रायः। एवं हेतुफलयोः कार्यकारणभावानुपपत्तेरजातिः सर्वस्यानुत्पत्तिः परिदीपिता प्रकाशिताऽन्योन्यापेक्षदोषं ब्रुवद्भिर्वादिभिर्बुद्धैः पण्डितैरित्यर्थः॥१९॥

---

वक्तुमशक्यमित्याह। यदीति। श्लोकाक्षराणि योजयति। अथमन्य- त्यादिना ॥१८॥

हेतुफलयोरिदं पूर्वमिदं पश्चादिति न ज्ञायते। परस्पराश्रयात्त्वे- तदेतत् पूर्वं निम्नमिति वक्तुमशक्यमित्याह। अशक्तिरिति। उत्त- रावसरे चेदुत्तरापरिज्ञानं तर्हि कथमशक्तिरूपकं तन्निग्रहस्थानम- प्रतिभाभिधानीयमापततीत्यर्थः। किञ्च यदि क्रमस्य नियतपूर्वापर- भावात्मनोऽपरिज्ञानं तदा पूर्वं कारणमुत्तरं कार्यमिति प्रतिज्ञा हीयेत। तथा च प्रतिज्ञाहानिर्निग्रहस्थानमापद्यतेत्याह। क्रमेति। अन्योन्यपक्षप्रतिक्षेपमुखेन सतोऽसतश्च जन्मनो प्रत्याख्याते। क्रमा- क्रमाभ्यामुत्पत्तेरनुपपत्तेरजातिर्बुद्धैरभिप्रेता वादिभिरादर्शिता भव- तीत्युपसंहरति। एवं हीति। आद्यं पादं व्याकरोति। अथेत्या- दिना। क्रमपक्षे पूर्वनियतमेतच्छब्देन परामृश्यते। द्वितीयपादं योजयति। अथ वेत्यादिना। द्वितीयार्द्धं विवृणोति। एवमिति॥१९॥

वीजाङ्कुराख्यो दृष्टान्तः सदा साध्यसमो हि सः।

ननु हेतुफलयोः कार्य्यकारणभाव इत्यस्माभिरुक्तं शब्दमात्रमाश्रित्य छलमिदं त्वयोक्तं पुत्राज्जन्म पितुर्यथा विषाणवच्चासम्बन्ध इत्यादि। न अस्माभिरसिद्धाद्धेतोः फलसिद्धिः असिद्धाद्वा फलाद्धेतुसिद्धिरभ्युपगता किन्तर्हि वीजाङ्कुरवत्कार्य्यकारणभावोऽभ्युपगम्यत इति। अत्रोच्यते। वीजाङ्कुराख्यो यो दृष्टान्तः स साध्येन तुल्यो ममेत्यभिप्रायः। न तु प्रत्यक्षः कार्य्यकारणभावो वीजाङ्कुरयोरनादिः न पूर्व्वस्य पूर्व्वस्याऽपरवदादिमत्त्वाऽभ्युपगमात्। यथेदानीमुत्पन्नोऽपरोऽङ्कुरो वीजादिमान् वीजञ्चाऽपरमन्यस्मादङ्कुरादिति क्रमेणोत्पन्नत्वादादिमत्। एवं

वीजाङ्कुरयोरिव हेतुफलयोरन्योन्यं कार्य्यकारणभावाभ्युपगमात्परस्पराश्रयत्वमित्याशङ्क्याह। वीजेति। दृष्टान्तस्य साध्यसमत्वेऽपि साधकत्वमस्तीत्याशङ्क्याह। न हीति। श्लोकापोह्यं चोद्यमुद्भावयति। नन्विति। शब्दमात्रं विवक्षितार्थशून्यम्। शब्दमाश्रित्य छलप्रयोगमेवोदाहरति। पुत्रादिति। आदिशब्देन फलादुत्पद्यमानस्य न ते हेतुः प्रसिध्यतीत्यादि गृह्यते। कार्य्यकारणभावो हेतुफलयोरित्यत्रानभिप्रेतमर्थं कथयति। न हीति। तत्रैव प्रश्नपूर्व्वकमभिप्रेतमर्थमुदाहरति। किन्तर्हीति। दृष्टान्तासम्प्रतिपत्त्या परिहरति। अत्रेति। मायावादिमते कश्चिदपि कार्य्यकारणभावस्य वस्तुभूतस्याऽसम्प्रतिपत्तेर्ममेत्युक्तम्। प्रत्यक्षावष्टम्भेन दृष्टान्तं साधयन्नाशङ्कते। नन्विति। किं वीजाङ्कुरव्यक्त्योरिह कार्य्यकारणत्वमिष्यते किं वा वीजाङ्कुरसन्तानयोरिति विकल्पाद्यं दूषयति। न पूर्व्वस्येति। तदेव प्रपञ्चयति। यथेत्यादिना। वीजव्यक्तेरङ्कुरव्यक्तेश्चोक्तप्रकारेणानादि-

स्वतो वा परतो वापि न किञ्चिद्वस्तु जायते ।
सदसत्सदसद्वापि न किञ्चिद्वस्तु जायते ॥ २२ ॥

---

केनचिदपि प्रकारेण जन्म सम्भवति । न तावत्स्वयमेवा ऽपरिनिष्पन्नात्स्वरूपात् स्वमेव जायते यथा घटस्तस्मादेव घटात् । नापि परतः अन्यस्मादन्यो यथा घटात्पटः पटात् पटान्तरं तथा नोभयतः । विरोधात् । यथा घटपटाभ्यां घटः पटो वा जायते । ननु मृदो घटो जायते पितुश्च पुत्रः सत्यम् अस्ति जायत इति प्रत्यय शब्दश्च मूढानां तावेव शब्दप्रत्ययौ विवेकिभिः परीक्ष्येते

किं सत्यमेव तौ ऽत अवेति यावता परीक्ष्यमाणे। शब्द-
प्रत्ययविषयं वस्तु घटपटादिलक्षणं शब्दमात्रमेव तत्।
वाचारम्भणमिति श्रुतेः। सद्वेन्न जायते सत्त्वात् मृत्पि-
ण्डादिवत्। यद्यसत्तथापि न जायते न विद्यत अस-
त्त्वादेव शशविषाणवत्। अथ सदसत्तथापि जायते
विरुद्धस्यैकस्यासम्भवात्। अतो न किञ्चिद्वस्तु जायत इति
सिद्धम्। येषां पुनर्जनिरेव जायत इति क्रियाकारक-
फलैकत्वमभ्युपगम्यते क्षणिकत्वञ्च वस्तुनः। ते दूरत एव
न्यायापेताः। इदमित्थमित्यवधारणक्षणान्तरानवस्थानात्
अननुभूतस्य स्मृत्यनुपपत्तेश्च ॥२२॥

---

जायमानो दृश्यते। तथा जायमानं चास्मादन्यस्माच्च भवतीत्युप-
पन्नमित्यर्थः। अन्यत्र सत्यपि जन्यजनकभावस्य प्रत्यक्षत्वात्सामग्री गम्यते
प्रतिक्षेप्तुमिति शङ्कते। नन्विति ॥ किं प्रत्यक्षानुसारिणौ शब्दप्रत्यया-
वविवेकिनामिष्येते किं वा विवेकिनामिति विकल्पमाद्यमङ्गीकरोति।
सत्यमिति ॥ द्वितीयं प्रत्याह। नावेवेति ॥ नैवेति परीक्ष्यमाणे
इतीति सम्बन्धः। तत्र जन्मशब्दधीविषयं वस्तु शब्दमात्रमेव। वाचा-
रम्भणश्रुतेरपरमार्थतो यावता विद्यते। तस्मादसत्यालम्बनत्वमेव
शब्दप्रत्यययोरेष्टव्यमिति योजना ॥ चतुर्थं प्रविभजयति। सद्वेदिति ॥
पञ्चमं निराकरोति। यदीति ॥ षष्ठं प्रत्यादिशति। अथेत्यादिना ॥
पक्षाणां विकल्पानां निरासे फलितं निगमयति। अतो नेति ॥ क्रियाका-
रकफलनानात्वपक्षे च जन्मानुपपत्तिदोषमुक्त्वा पक्षान्तरमनूद्य दूषयति।
येषाम्पुनरिति ॥ बौद्धानां न्यायारम्भेन वस्तु व्यवस्थापयतां कुतो
न्यायबाह्यत्वमित्याशङ्क्याह। इदमिति ॥ इदमा वस्तु परामृष्टम्।
इत्थमिति क्षणिकत्व विवक्षितम्। एवमवधारणावच्छिन्नं क्षणं वस्तुन-
श्छेदकक्षणातिरिक्तं वस्तुनोऽवस्थानाभावाच्च तस्मिन्ननुभव, सिध्यती-

प्रज्ञप्ते सनिमित्तत्वमिष्यते युक्तिदर्शनात् ।

---

न हि विज्ञानमात्रे संक्लेशो युक्तः। अन्यत्रादर्शनादित्यभिप्रायः ॥२४॥

अत्रोच्यते बाढम् एवं प्रज्ञप्तेः सनिमित्तत्वं द्वयसंक्लेशोपलब्धियुक्तिदर्शनादिष्यते त्वया। स्थिरीभव तावत्त्वं युक्तिदर्शनं वस्तुनस्तथात्वाभ्युपगमे कारणमित्यत्र ब्रूहि किन्तत इति। उच्यते। निमित्तस्य प्रज्ञप्त्यालम्बनाभिमतस्य तव घटादेरनिमित्तत्वमनालम्बनत्वं वैचित्र्याहेतुत्वमिष्यतेऽस्माभिः कथं भूतदर्शनात् परमार्थदर्शनादित्येतत्। न हि घटो यथाभूतमृद्रूपदर्शने सति तद्व्यतिरेकेणास्ति। यथाऽश्वान्महिषः पटो वा तन्तुव्यतिरेकेण।

---

हेत्वाभावमाह। न हीति॥ अन्यत्र दाहच्छेदादिव्यतिरिक्ते चन्दनपङ्कलेपादाविति यावत् ॥२४॥

द्वाभ्यामर्धाभ्यां बाह्यार्थवादे प्राप्ते विज्ञानवादमुत्थापयति। प्रज्ञप्तेरिति॥ वस्तु का नाम वस्तुव्यतिरिक्तमित्याशङ्क्याह। निमित्तस्येति॥ मतान्तरे प्राप्ते तन्निराकरणमुच्यते। विज्ञानवादिनेति। श्लोकस्य तात्पर्यमाह। अत्रेति॥ तत्र पूर्वार्धं विभजते। बाढमित्यादिना॥ द्वैतिनस्तव तर्कप्रधानताम् प्रतीतिमात्रशरणता युक्तेति मत्वाह। स्थिरीभवेति॥ वस्तुनो बाह्यस्यार्थस्य तथात्वं प्रज्ञप्तिविषयत्वं तस्याभ्युपगमे कारणं प्राप्तयुक्तिदर्शनमित्येतस्मिन्नर्थे त्वं स्थिरीभवेति योजना। विचारदृष्टिमेवावष्टभ्याहं त्वां कियतो दूषणं ब्रूहीति पृच्छति। ब्रूहीति॥ तस्योत्तरार्धे सिद्धान्ती व्याकुर्वन्नुत्तरमाह। उच्यत इत्यादिना॥ घटादेर्वैचित्र्याहेतुत्वे प्रश्नपूर्वकं हेतुमाह। कथमित्यादिना॥ परमार्थदर्शनं प्रपञ्चयति। न हीति॥ तत्र वैधर्म्यदृष्टान्तमाह।

चित्तं न संस्पृशत्यर्थं नार्थाभासं तथैव च।
अभूतो हि यतश्चार्थो नार्थाभासस्ततः पृथक्॥२६॥

यस्मान्नास्ति बाह्यं निमित्तम् अतश्चित्तं न स्पृशत्यर्थं बाह्यालम्बनविषयम्। नाप्यर्थाभासं चित्तत्वात्स्वप्नचित्तवत्। अभूतो हि जागरितेऽपि स्वप्नार्थवदेव बाह्यः शब्दाद्यर्थो यत उक्तहेतुत्वाच्च नाप्यर्थाभासश्चित्तात्पृथक् चित्तमेव हि घटाद्यर्थवदवभासते यथा स्वप्ने॥२६॥

मुक्तमर्थोपपत्तिद्वयं कथं निरसनीयमित्याह। एतेनेति॥ तत्त्वदर्शिनां स्फुरणातिरिक्तवस्त्वनुपलम्भप्रदर्शनेन वैचित्र्यदर्शनं दुःखोपलब्धिश्च प्रयुक्ता। तेनानुपपद्यमानार्थोपलब्धिद्वयस्यानुत्थानम्। व्यवहारदृष्ट्या तु पूर्वं भ्रमसमारोपितसर्ववदेव संवेदने वैचित्र्यं दुःखव्यवहाराङ्गमित्यन्यथाप्युपपत्तिरित्यर्थः॥२५॥

ज्ञानस्य सालम्बनत्वप्रसिद्धेस्तत्त्वदृष्ट्या ज्ञेयाभावे ज्ञानमपि न स्यादित्याशङ्क्याह। चित्तमिति॥ न हि स्फुरणं सकर्मकं तस्य सकर्मकत्वप्रसिद्ध्यभावात्। जानातेस्तु सकर्मकत्वं क्रियाफलत्वकल्पनयारोपितमिति भावः। चित्तस्यार्थस्पर्शित्वाभावेऽपि तदाभासस्पर्शित्वं स्यादित्याशङ्क्याह। नार्थेति॥ तत्र हेतुमाह। अभूत इति॥ प्रथमपादं व्याचष्टे। यस्मादिति॥ विमतं चित्तमर्थाभासमपि न स्पृशति चित्तत्वात् सम्प्रतिपन्नवदिति द्वितीयं पादं विभजते। नापीति॥ न हि दृष्टान्ते तस्यार्थाभासस्पर्शित्वं तस्यैव तदात्मना भानादित्यर्थः॥ तृतीयपादं व्याकरोति। अभूतो हीति॥ विमतोऽर्थो मृषा भवति धर्मत्वात् सम्प्रतिपन्नवदित्यनुमानाच्च ज्ञानस्यानालम्बनमित्यर्थः॥ विमतोऽपि स्वविषयज्ञानजनको न भवति भ्रान्तिविषयत्वात् सम्प्रतिपन्नवदित्युक्तमनुमानं स्मारयति। उक्तेति॥ अर्थजन्यत्वाभावे विज्ञानस्यार्थाभासजन्यत्वं स्यादित्याशङ्क्य चतुर्थपादार्थमाह। नापीति॥२६॥

**निमित्तं न सदा चित्तं संस्पृशत्यध्वसु त्रिषु ।**
**अनिमित्तो विपर्यासः कथं तस्य भविष्यति ॥२७॥**

---

ननु विपर्यासस्तर्हि असति घटादौ घटाद्याभासता चित्तस्य तथा च सत्यविपर्यासः क्वचिद्वक्तव्य इति । अतोच्यते । निमित्तं विषयमतीतानागतवर्त्तमानाध्वसु त्रिष्वपि सदा चित्तं न स्पृशेदेव हि । यदि हि क्वचित्संस्पृशेत्सोऽविपर्यास परमार्थत इति । अतस्तदपेक्षयाऽसति घटे घटाभासता विपर्यासः स्यात् न तु तदस्ति कदाचिदपि चित्तस्यार्थसंस्पर्शनम् । तस्मादनिमित्तो विपर्यासः कथं तस्य चित्तस्य भविष्यति न कथञ्चिद्विपर्यासोऽस्तीत्यभिप्राय । अयमेव हि स्वभावश्चित्तस्य । यदुतासति निमित्ते घटादौ तद्वदवभासनम् ॥२७॥

---

ज्ञानस्य सालम्बनत्वाभावे तस्य तथात्वप्रथा भ्रान्तिर्भवेत् । भ्रान्तिश्चाभ्रान्तिमतियोगिनीत्यन्यथाख्यातिमतमाशङ्क्याह । निमित्तमिति । कालत्रयेऽपि ज्ञानस्य वस्तुतोऽर्थस्पर्शित्वाभावे तद्वासनाभावात् तद्भ्रान्त्या नान्यथा ख्याति सिद्ध्यति । भ्रान्तिस्तु विचारदृष्ट्यापि भविष्यतीत्याह । अनिमित्त इति । श्लोकव्यावर्त्त्यामाशङ्कां दर्शयति । नन्विति । यदि घटादिर्बाह्योऽर्थो न स्पृश्यते तर्हि तस्मिन्नसत्येव तदाभासत्वाज्ज्ञानस्य विपर्यास । अतस्मिंस्तद्बुद्धिरूपत्वात् । विपर्यासे च लौकिके क्वचिदविपर्यासो वक्तव्य । भ्रान्तेरभ्रान्तिपूर्वत्वस्यान्यथाख्यातिवादिभिरिष्टत्वादित्यर्थः । तत्र पूर्वार्द्धयोजनया परिहरति । अत इति । उक्तमेवार्थमुत्तरार्द्धयोजनार्थं साधयति । यदीति । अर्थान्तरभावादसत्येव भ्रान्तरसति घटादौ घटाद्याभासता ज्ञानस्य कथं निर्निमित्तेत्याशङ्क्याह । अयमेवेति । स्वभावमद्भा

तस्मान्न जायते चित्तं चित्तदृश्यं न जायते।

प्रज्ञप्तेः सनिमित्तत्वमित्याद्येतदन्तं विज्ञानवादिनो बौद्धस्य वचनं बाह्यार्थवादिपक्षप्रतिषेधपरमाचार्य्येणानुमोदितम्। तदेव हेतुं कृत्वा तत्पक्षप्रतिषेधाय तदिदमुच्यते तस्मादित्यादि। यस्मादसत्येव घटादौ घटाद्याभासता चित्तस्य विज्ञानवादिनाऽभ्युपगता तदनुमोदितमस्माभिरपि भूतदर्शनात् तस्मात्तस्यापि चित्तस्य जायमानावभासताऽसत्येव जन्मनि युक्ता भवितुमित्यतो न जायते चित्तम्। यथा चित्तदृश्यं न जायते अतस्तस्य चित्तस्य ये जातिं पश्यन्ति विज्ञानवादिनः क्षणिकदुःखशून्यत्वानात्मत्वादि च। तेनैव चित्तेन चित्तस्वरूपं द्रष्टुमशक्यं पश्यन्तः खे वै पश्यन्ति ते पदं पक्ष्यादीनाम्। अत इतरे-

---

विद्याच्यते। न हि भ्रान्तिरभ्रान्तिपूर्व्विकेति नियमः। सविपर्ययाणा भ्रमाणामविद्यायास्त्वभ्युपगमादित्यर्थः ॥२७॥

बाह्यार्थवादिपक्षमेव विज्ञानवादिमुखेन प्रतिक्षिप्य विज्ञानवादिमिदानीमपवदति। तस्मादिति॥ प्रतिक्षणं विज्ञानस्य जन्म दृश्यते विज्ञानवादिभिरित्याशङ्क्याह। तस्येति॥ उक्तमर्थं कीर्त्तनपूर्व्वकं श्लोकस्य तात्पर्य्यमाह। प्रज्ञप्तेरिति॥ तत्र बाह्यार्थवादिनो बाह्योऽर्थो विज्ञानवदस्तीति पक्षप्रतिषेधमुखेनाभिप्रेतं तत्पुनराचार्य्येण भवत्वेवमित्यभ्यनुज्ञातम्॥ बाह्यार्थवाददूषणस्य स्वमतेऽपि सम्मतत्वादित्याह। बाह्योऽर्थ इति॥ बाह्यार्थवाददूषणानुमोदनप्रयोजनमाह। तदेवेति॥ असत्येव घटादौ घटाद्याभासत्वं विज्ञानस्य यदुक्तं तदेव हेतुत्वेनोपादाय विज्ञानवादिनिषेधार्थं बाह्यार्थपक्षदूषणमनुमोदितमित्यर्थः॥ सम्प्रति विज्ञानवादमवतारयति। तदिदमिति॥ तस्मादित्यादि व्याचष्टे।

प्रकृतेरन्यथाभावो न कथञ्चिद्भविष्यति ॥२९॥
अनादेरन्तवत्त्वञ्च संसारस्य न सेत्स्यति।

ख्यातं तत्फलोपसंहारार्थोऽयं श्लोकः। अजातं यच्चितं ब्रह्मैव जायत इति वादिभिः परिकल्प्यते तदजातं जायते यस्मादजातिः प्रकृतिस्तस्य ततस्तस्मादजातरूपायाः प्रकृतेरन्यथाभावो जन्म न कथञ्चिद्भविष्यति ॥२९॥

अयञ्चापर आत्मनः संसारमोक्षयोः परमार्थसद्भाववादिना दोष उच्यते। अनादेरतीतकोटिरहितस्य संसारस्यान्तवत्त्वं समाप्तिर्न सेत्स्यति युक्तितः सिद्धिं नोपयास्यति। न ह्यनादिः सन्नन्तवान् कश्चित्पदार्थो दृष्टो लोके। बीजाङ्कुरसम्बन्धनैरन्तर्यविच्छेदो दृष्ट इति चेत्। न। एकवस्त-

अनन्तता चादिमतो मोक्षस्य न भविष्यति॥३०॥
आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा ।
वितथै: सदृशाः सन्तोऽवितथा इव लक्षिताः ॥३१॥
सप्रयोजनता तेषां स्वप्ने विप्रतिपद्यते ।
तस्मादाद्यन्तवत्त्वेन मिथ्यैव खलु ते स्मृताः ॥३२॥

भावेनापोदितत्वात् । तथाऽनन्तताऽपि विज्ञानप्राप्तिकालप्रभवस्य मोक्षस्यादिमतो न भविष्यति । घटादिष्वदर्शनात् । घटादिविनाशवदवस्तुत्वाददोष इति चेत् । तथा च मोक्षस्य परमार्थसद्भावप्रतिज्ञाहानि । असत्त्वादेव शशविषाणस्येवादिमत्त्वाभावश्च ॥३०॥

वैतथ्ये कृतव्याख्यानौ श्लोकाविह संसारमोक्षाभावप्रसङ्गेन पठितौ ॥३१॥३२॥

---

योऽनादिभावः सोऽन्तवान्नेति व्याप्तिरायाति व्याप्त्याह । न हीति । बीजाङ्कुरयोर्हेतुफलभावेन सम्बन्धस्तस्य नैरन्तर्यं सन्तानस्तस्यादि भावत्वेऽपि विच्छेदस्यान्तस्य दृष्टत्वादनैकान्तिकतेति शङ्कते । बीज । भावत्वविशेषणस्य तत्रावर्तनाद् व्यभिचारचोद्यमिति दूषयति । नैकेति द्वितीयार्धं व्याचष्टे । तथेति । यदादिमत्तत्र नाशवत्त्वमिति व्याप्तिभूमिमाह । घटादिष्विति । यथा कृतकोऽपि घटादिध्वंसो नित्यस्तथा मोक्षोऽपि भविष्यतीत्यनैकान्तिकत्वमाशङ्कते । घटादीति । मोक्षस्याभावत्वे सति परमार्थसत्त्वप्रतिज्ञा भज्यतेति दूषयति । तथा चेति । किञ्च मानमत भवता समवायरूप कार्यत्व तत्रापि मोक्षस्य सत्त्वे न सिद्धयतीत्याह । असत्त्वादेवेति ॥३०॥

अस्तु तर्हि मोक्षस्याद्यन्तवत्त्वं तत्राह । आदाविति । यदि मृद्घटोदकादि स्वप्नादौ यथा वस्तुतो नास्त्यर्थाति दावद् । वितथैरेव

**सर्व्वे धर्म्मा मृषा स्वप्ने कायस्यान्तर्निदर्शनात्।**
**संवृत्तेऽस्मिन् प्रदेशे वै भूतानां दर्शनं कुतः॥३॥**
**न युक्तं दर्शनं गत्वा कालस्यानियमाद्गतौ।**

---

निमित्तस्यानिमित्तत्वमिष्यते भूतदर्शनादित्ययमर्थः प्रपञ्च्यते एतैः श्लोकैः॥३॥

जागरिते गत्वागमनकालौ नियतौ देशः प्रमाणतो

---

मरीच्युदकादिभिः साधर्म्यमाद्यन्तवत्त्वम्। वितथा मोक्षादयो न परमार्थसन्तो भवितुमर्हन्ति आद्यन्तवत्त्वान्मरीच्युदकादिवदित्यर्थः॥ कथं तर्हि मोक्षादीनामपि तथात्वमपेक्ष्येत्याशङ्क्याह। अवितथा इति॥ लक्षिता मूढैरविचारकैरिति शेषः। ऊषरोदकादीनां स्नानपानादिप्रयोजनानुपलम्भान्मोक्षस्वर्गादीनान्तु सुखादिप्राप्तिप्रयोजनप्रतिलम्भात् मोक्षादिवैतथ्यमित्याशङ्क्याह। सप्रयोजनतेति॥ तेषां मोक्षादीनामिति यावत्। पुनरुक्तिशङ्कां वारयति। वैतथ्य इति॥२१॥२२॥

किञ्च येन हेतुना स्वप्नस्य मिथ्यात्वमिष्टं तस्य जागरितेऽपि तुल्यत्वाज्जन्मादिरहितं संविन्मात्रं तत्त्वमेष्टव्यमिति विवक्षित्वाह। सर्व्वेति॥ यदि देहान्तर्दर्शनान्मिथ्यात्वं स्वप्नस्येष्टं तर्हि वैराजदेहैकदेशस्य जागरितस्य दर्शनात् मिथ्यात्वं दुर्व्वारमित्यर्थः। किञ्च योग्यदेशवैधुर्य्यान्मिथ्यात्वं स्वप्नस्य यद्यभीष्टं तर्हि संवृते प्रदेशे प्रत्यगभूते सच्चिदात्मखण्डैकरसे भूतानां विद्यमानानां दर्शनं न कुतोऽपि स्यात् अच्छपोऽनवकाशत्वादित्याह। संवृत इति॥ अवतारितश्लोकसहितानामुत्तरश्लोकानां वात्याभासमित्यस्यामात्मनानां तात्पर्य्यमाह। निमित्तस्येति॥३॥

उक्तमेवार्थं प्रपञ्चयति। न युक्तमित्यादिना॥ स्वप्न देशान्तरगतौ नियतकालाभावाच्च गत्वा दर्शनमिष्टं तथा मरणादूर्द्धमर्चिरादिमार्गेण गत्वा ब्रह्मदर्शनमयुक्तं कालानवच्छिन्नत्वादित्यर्थः। किञ्च यद्देशस्थः

प्रतिबुद्धश्च वै सर्वस्तस्मिन् देशे न विद्यते ॥३४॥
मित्राद्यैः सह संमन्त्र्य संबुद्धो न प्रपद्यते ।
गृहीतं चापि यत्किञ्चित्प्रतिबुद्धो न पश्यति॥३५॥

---

यस्मात्तस्मान्नियमात् नियमस्याभावात् स्वप्ने न देशान्तरगमनमित्यर्थ ॥३४॥

मित्राद्यै सह सम्मन्त्र्य तदेव मन्त्रणं प्रतिबुद्धो न प्रपद्यते। गृहीतञ्च यत्किञ्चित् हिरण्यादि न प्राप्नोति। गतश्च न देशान्तरं गच्छति स्वप्ने ॥३५॥

---

स्वप्न पश्यति प्रतिबुद्धस्तस्मिन्देशे नास्तीति मिथ्यात्वमभीष्टम्। यथा यस्मिन्देशे स्थित स्वप्नमनुभवति तद्भाव प्रतिपद्यमानस्तस्मिन्देशे नास्ति परिपूर्णमदृष्टरूपेणावस्थानादतो जागरितस्यापि मिथ्यात्वमिष्टमभि प्रायः। प्रतिबुद्धश्चेति। श्लोकस्य तात्पर्यार्थं कथयति। जागरित इति ॥१॥

**स्वप्ने चावस्तुकः कायः पृथगन्यस्य दर्शनात्।**
**यथा कायस्तथा सर्वं चित्तदृश्यमवस्तुकम्॥३६॥**
**ग्रहणाज्जागरितवत्तद्धेतुः स्वप्न इष्यते।**

---

स्वप्ने च अटन् दृश्यते यः कायः सोऽवस्तुकस्ततोऽन्यस्य स्वापदेशस्थस्य पृथक्कायान्तरस्य दर्शनात्। यथा स्वप्नदृश्यः कायोऽसंस्तथा सर्वं चित्तदृश्यमवस्तुकं जागरितेऽपि चित्तदृश्यत्वादित्यर्थः। स्वप्नसमत्वादसज्जागरितमपीति प्रकरणार्थः॥३६॥

इतश्चासत्त्वं जाग्रद्वस्तुनो जागरितवज्जागरितस्येव ग्रहणात् ग्राह्यग्राहकरूपेण स्वप्नस्य तज्जागरितं हेतुरस्य स्वप्नस्तद्धेतुर्जागरितकार्यमिष्यते। तद्धेतुत्वाज्जागरितकार्यत्वात्तस्यैव स्वप्नदृश एव सज्जागरितं न त्वन्येषाम्।

---

किञ्च स्वप्नावस्थायां येन देहेन नद्यादिषु पर्यटति स मिथ्या पृथग्भूतस्य निश्चलस्य दर्शनात्। तथा जागरिते यो न परिव्राजकादिशरीरेण लोकस्य पूज्यो हेयो वा दृश्यते स मिथ्या कथ्यते। पृथगेव कूटस्थब्रह्मात्मशरीरस्यानुभवादित्याह। स्वप्ने चेति॥ किञ्च यथा स्वप्नदेहो मिथ्या तथा चित्तदृश्यं जडं सर्वमवस्तुकं मिथ्याभूतमेवेति तथ्यमित्याह। यथेति॥ पदार्थगतान्यक्षराणि योजयति। स्वप्ने इति॥ उत्तरार्धगतानि व्याकरोति। यथेत्यादिना॥ प्रकरणार्थमुपसंहरति। स्वप्नेति॥३६॥

यथा जागरितं तथा स्वप्नो दृश्यते। तथा स्वप्नस्य जागरितकार्यत्वाच्च स्वप्नद्रष्टा तस्यैव जागरितं सदिति स्वप्नवत्तन्मिथ्यात्वमित्याह। ग्रहणादिति॥ किञ्च जागरितस्य विद्यमानत्वमनेकसाधारणत्वं वस्तुनो नास्ति स्वप्नकारणत्वात् किन्तु तथा भासमानत्वमित्याह।

तद्धेतुत्वात्तु तस्यैव सज्जागरितमिष्यते ॥३७॥
उत्पादस्याप्रसिद्धत्वादजं सर्वमुदाहृतम्।
न च भूतादभूतस्य सम्भवोऽस्ति कथञ्चन ॥३८॥

---

यथा स्वप्न इत्यभिप्रायः। यथा स्वप्नः स्वप्नदृश एव सन् साधारणविद्यमानवस्तुवदवभासते तथा तत्कारणत्वात्साधारणविद्यमानवस्तुवदवभासनं न तु साधारणं विद्यमानवस्तु स्वप्नवदेवेत्यभिप्रायः ॥३७॥

ननु स्वप्नकारणत्वे जागरितवस्तुनो न स्वप्नवदवस्तुत्वम्। अत्यन्तचलो हि स्वप्नो जागरितन्तु स्थिरं लक्ष्यते। सत्यमेवमविवेकिना स्यात् विवेकिनान्तु न कस्यचित् वस्तुन उत्पादः प्रसिद्धोऽतोऽप्रसिद्धत्वादुत्पादस्यात्मैव सर्वमित्यजं सर्वमुदाहृतं वेदान्तेषु सबाह्याभ्यन्तरो ह्यज इति। यदपि

---

तद्धेतुत्वादिति। जागरितस्य स्वप्नो ऽसत्त्वे हेत्वन्तरत्वं ... दर्शयति। इतश्चेति। इतःशब्दार्थमेव स्फोरयन् पूर्वार्द्धं ... । जागरितवदिति। उत्तरार्द्धं योजयति। तद्धेतुत्वादिति। यदि प्रमाणादि बाध्यत्वं स्वप्नस्य मिथ्यात्वं जागरितस्य पुनस्तदनुपलम्भात् परमार्थं सत्यम्। कार्यस्य मिथ्यात्वे कारणस्यापि मिथ्यात्वमिति मानाभावात्। न हि सर्वं साधारणं विद्यमानवस्तु जागरितं मिथ्या भवितुमर्हतीत्याशङ्क्याह यथेत्यादिना ॥ ३७ ॥

कार्यकारणभावेऽपि स्वप्नजागरितयोर्न मिथ्यात्वमविशिष्टमत्यन्त-वैषम्यादित्याशङ्क्याह। तत्र दर्शयति। ननु कार्यकारणत्वं सत्या-वस्थयोरेव स्वप्नजागरितयोरिष्टं तत् दुरुक्तमित्याह। न चेति। स्वाभिमतोऽत्यन्तासद्वैलक्षण्यमाह। नन्विति। किमिदं वैलक्षण्यमविवेकिनां

असज्जागरिते दृष्ट्वा स्वप्ने पश्यति तन्मयः।

मन्यसे जागरितात्ततोऽसन्स्वप्नो जायत इति तदसत्। न भूताद्विद्यमानादभूतस्यासतः सम्भवोऽस्ति लोके। न ह्यसतः शशविषाणादेः सम्भवो दृष्टः कथञ्चिदपि॥३८॥

ननूक्तं त्वयैव स्वप्नो जागरितकार्यमिति तत्कथमुत्पादो प्रसिद्ध इत्युच्यते। शृणु तत्र यथा कार्यकारणभावोऽस्माभिरभिप्रेत इति। असदविद्यमानं रज्जुसर्पवद्विकल्पितं वस्तु जागरिते दृष्ट्वा तद्भावभावितस्तन्मयः स्वप्ने जागरितवद्ग्राह्यग्राहकरूपेण विकल्पयन् पश्यति

प्रतिभाति किंवा विवेकिनामिति विकल्पद्वयमङ्गीकरोति। सत्यमिति। द्वितीयं प्रत्याह। विवेकिनां त्विति। द्वितीयभागमाकाङ्क्षाद्वारा विभजते। यद्यपीत्यादिना। सम्भवो नासतोऽस्तीत्येतद् दृष्टान्तेन साधयति। न ह्यीति। कथञ्चिदपि सतोऽसतो वेत्यर्थः॥३८॥

यदुक्तमुत्पादस्याप्रसिद्धत्वं तदयुक्तम्। स्वप्नजागरितयोस्तत्कार्यकारणत्वाङ्गीकरणादित्याशङ्क्याह। असदिति। जागरिते दृष्टस्य स्वप्ने दर्शनात्। जागरितस्य स्वप्नम्प्रति कारणत्वं चेत्तर्हि स्वप्ने दृष्टस्य जागरितेऽपि दर्शनात्तस्य जागरितम्प्रति कारणत्वं किं न स्यादित्याशङ्क्याह। असत्स्वप्नेऽपीति। श्लोकस्याक्षरोत्थामाशङ्कामुत्थापयति। नन्विति। पूर्वापरविरोधे चोदिते परिहारे कथ्यमाने मनःसमाधानं प्रार्थ्यते। शृण्विति। तमेव प्रकारं प्रकटयन्नक्षराणि योजयति। असदिति। तुच्छत्वं व्यवच्छिनत्ति। रज्ज्विति। दर्शनस्याभासत्वं सूचयति। विकल्पितमिति। यथा जाग्रद्दृष्टस्य विषयस्य स्वप्ने दर्शनाज्जागरितवासनाधीनः स्वप्नो जागरितकार्यत्वेन व्यपदिश्यते तथा स्वप्ने दृष्टस्य जागरितेऽपि दर्शनात्तत्कार्यत्वं जागरितस्य प्राप्तमित्याशङ्क्य द्वितीयार्द्धं व्याचष्टे। तथेति। यत्तु स्वप्नजागरितयोरुक्तं कार्य-

असत्स्वप्नेऽपि दृष्ट्वा च प्रतिबुद्धो न पश्यति ॥३९॥
नास्त्यसद्धेतुकमसत् सदसद्धेतुकन्तथा ।

तथा सत्स्वप्नेऽपि दृष्ट्वा च प्रतिबुद्धो न पश्यति अविकल्पयन् च शब्दात् । तथा जागरितेऽपि दृष्ट्वा स्वप्ने न पश्यति कदाचिदित्यर्थः । तस्माज्जागरितं स्वप्नहेतुरुच्यते न तु परमार्थसदिति कर्त्ता ॥३९॥

परमार्थतस्तु न कस्यचित्केनचिदपि प्रकारेण कार्य्यकारणभाव उपपद्यते कथं नास्त्यसद्धेतुकमसच्छशविषाणादि हेतुः कार्य्यं यस्यासत एव खपुष्पादेस्तदसद्धेतुकमसन्न विद्यते । यथा सदपि घटादिवस्तु । असद्धेतुकं शशविषाणादिकार्य्यं नास्ति । तथा सच्च विद्यमानं घटादि-

सच्च सद्धेतुकं नास्ति सद्धेतुकमसत्कुतः ॥४०॥
विपर्यासाद्यथा जाग्रदचिन्त्यान् भूतवत् स्पृशेत् ।
तथा स्वप्ने विपर्यासाद्धर्मांस्तत्रैव पश्यति ॥४१॥

---

वस्त्वन्तरं कार्यं नास्ति । सत्कार्यमसत्कुत एव सम्भवति । न चान्यः कार्यकारणभावः सम्भवति शक्यो वा कल्पयितुम् । अतो विवेकिनामसिद्ध एव कार्यकारणभावः कस्यचिदित्यभिप्रायः ॥४०॥

पुनरपि जाग्रत्स्वप्नयोरसतोरपि कार्यकारणभावाशङ्कामपनयन्नाह । विपर्यासादविवेकतो यथा जाग्रज्जागरितेऽचिन्त्यान् भावान् अशक्यचिन्तनीयान् रज्जुसर्पादीन् भूतवत्परमार्थवत्स्पृशेत् स्पृशन्निव विकल्पयेदित्यर्थः । कश्चिद्यथा तथा स्वप्ने विपर्यासाद्धस्त्यादीन् पश्यन्निव विकल्पयति तत्रैव पश्यति न तु जागरितादुत्पद्यमाना-दित्यर्थः ॥४१॥

---

कारणत्वं यया कया च प्रक्रियया प्रतिपादयितुमुचितम् अन्यथा प्रसिद्ध-प्रकोपादित्याशङ्क्याह । कथमिति । अनिर्वाच्य मायामयं कार्य-कारणत्वं प्रतीतिमात्रसिद्धमयौक्तिकमविकल्प्य प्रतिबिम्बदर्शितहेत्वभिसन्धा-याद्यं पादं विभजते । नास्तीत्यादिना । द्वितीयं पादं व्याचष्टे । तथे-त्यादिना । तृतीयं पादं व्याकरोति । तथा सद्वेति । चतुर्थपादार्थ-माह । असदिति । वस्तु तर्हि प्रकारान्तरेण कार्यकारणभावं कल्प्य-मद्य योग्यानुपलब्धिविरुद्धत्वान्नेत्याह । न चेति ॥४०॥

स्वप्नजागरितयोर्वस्तुतो नास्ति कार्यकारणत्वमित्यत्र चेतनानु-माह । विपर्यासादिति । श्लोकस्य तात्पर्यमाह । पुनरपीति । पदार्थं कथयति । विपर्यासादित्यादिना । कश्चिदित्यस्य पूर्वेण

उपलम्भात् समाचारादस्ति वस्तुत्ववादिनाम् ।
जातिस्तु देशिता बुद्धैरजातेस्त्रसतां सदा ॥४२॥

---

यापि बुद्धैरद्वैतवादिभिर्जातिर्देशितोपदिष्टा । उपलम्भनमुपलम्भस्तस्मादुपलब्धेरित्यर्थः । समाचाराद्वर्णाश्रमादिधर्मसमाचरणाच्च ताभ्यां हेतुभ्यामस्ति वस्तुत्ववादिनामस्ति वस्तुभाव इत्येवं वदनशीलानां दृढग्राहवतां श्रद्दधानानां मन्दविवेकिनामर्थोपायत्वेन सा देशिता जातिस्तां गृह्णन्तु तावत् । वेदान्ताभ्यासिनां तु स्वयमेवाजाद्वयात्मविषयो विवेको भविष्यतीति न तु परमार्थबुद्ध्या । ते हि श्रोत्रियाः । स्थूलबुद्धित्वादजातेः । अजातिवस्तुनः सदा त्रसन्त्यात्मनाशं मन्यमाना अविवेकिन इत्यर्थः ॥४२॥

---

क्रियापदेन सम्बन्धः । दृष्टान्तमनूद्य दार्ष्टान्तिकमाह । यथेत्यादिना ॥४१॥

नन्वद्वयात् कार्यकारणत्वस्याप्रसिद्धत्वे कथं जन्मादिसूत्रमनुसृत्य ईक्षणादिपूर्वकं जगत्कारणं ब्रह्म सूचितमित्याशङ्क्याह । उपलम्भादिति ॥ अविवेकिनां विवेकोपायत्वेन कार्यकारणत्वमुपेत्य सूत्रकारप्रवृत्तिरित्यर्थः ॥ श्लोकाक्षराणि व्याचष्टे । यापीत्यादिना ॥ अस्ति वस्तुभावो द्वैतस्येति शेषः । कार्यकारणभावमुपेत्य जन्मोपदिशतामद्वैतवादिनां मन्दविवेकिषु विवेकार्थोपायत्वेन कथं तदुपदेशः स्यादित्याशङ्क्याह । तामिति ॥ यदा ब्रह्मणः सकाशादेव जगदुत्पत्तिरभ्युपेता तदा तदतिरेकेण जगतोऽभावात् ब्रह्मैव सर्वमिति निश्चितम् । तद्विषयेषु च वेदान्तेषु पौर्वापर्यपर्यालोचितेषु तदभ्यासिनां तेषां तदभ्यासप्रसादादेव कूटस्थाद्वितीयवस्तुविवेकोदयात् सद्वस्तुतोऽविभक्तादद्वैतवादिभिर्जातिरुपदिष्टा न तु द्वैतस्य श्रुतितो न्यायतश्च निरूपयितुमश

अजातेस्त्रसतान्तेषामनुपलम्भाद्वियन्ति ये।
जातिदोषा न सेत्स्यन्तिदोषोऽप्यल्पोभविष्यति॥४३॥
उपलम्भात् समाचारान्मायाहस्ती यथोच्यते।

उपायः सोऽवतारायेत्युक्तम्। ये, चैवमुपलम्भात् समाचाराद्वाऽजातेरजातिवस्तुनस्त्रसन्तो ऽस्ति वस्त्वित्यद्वयात्मनो वियन्ति विरुद्धं यान्ति द्वैतं प्रतिपद्यन्त इत्यर्थः। तेषामजातेस्त्रसतां श्रद्दधानानां सन्मार्गावलम्बिनां जातिदोषा जात्युपलम्भकृता दोषा न सेत्स्यन्ति सिद्धिं नोपयास्यन्ति। विवेकमार्गप्रवृत्तत्वात्। यद्यपि कश्चिद्दोषः स्यात् सोऽप्यल्प एव भविष्यति। सम्यग्दर्शनाप्रतिपत्तिहेतुक इत्यर्थः॥४३॥

ननूपलम्भसमाचारयोः प्रमाणत्वादस्त्येव द्वैतं वस्त्विति।

क्यस्य परमार्थतां स्वहीत्वा जातिरुपदिदेश्यजातिरेव पारमार्थिको त्यर्थः चतुर्थपादार्थमाह। ते इति ॥४२॥

एवं न जायते चित्तमेवंधर्म्मा अजाः स्मृताः ।
एवमेव विजानन्तो न पतन्ति विपर्य्यये ॥४६॥

---

तत्त्वजमचलमवस्तुत्वमद्वयञ्च । किन्तदेवम्प्रकारं विज्ञानं विज्ञप्तिः । जात्यादिरहितत्वाच्छान्तम् । अत एवाद्वयञ्च तदित्यर्थः ॥४५॥

एवं यथोक्तेभ्यो हेतुभ्यो न जायते चित्तमेवंधर्म्मा आत्मानोऽजाः स्मृता ब्रह्मविद्भिः । धर्म्मा इति बहुवचनम् । देहभेदानुविधायित्वादद्वयस्यैवोपचारतः । एवमेव यथोक्तं विज्ञानं जात्यादिरहितमद्वयमात्मतत्त्वं विजानन्तस्त्यक्तबाह्यैषणाः पुनर्न पतन्त्यविद्याध्वान्तसागरे । विपर्य्यये तत्र को मोहः कः शोक एकत्वमनुपश्यत इत्यादिमन्त्रवर्णात् ॥३६॥

---

त्वदीर्घत्वोक्त्या देयदत्तस्य गुणवत्त्वेन दृष्टान्त स्फुटीक्रियते । पूर्वार्धोक्तमिदेनापरार्द्धे योजयति । जायत इत्यादिना । विशेष्य मन्त्र पूर्वार्द्धं विशदयति । किन्तदित्यादिना ॥५॥

ब्रह्मणोऽद्वयत्वमुपपादितमुपसंहरति । एवं नेति । चित्प्रतिबिम्बानां जीवानां बिम्बभूतब्रह्ममात्रत्वादजत्वमविशिष्टमित्याह । एवमिति । उक्तब्रह्मात्मैक्यज्ञानस्य फलमाह । एवमिति । श्लोकाक्षराणि व्याकरोति । एवमित्यादिना । कार्य्यकारणभावस्य दुर्भणत्वादयो यथोक्ता हेतवश्चित्तचैतन्य शब्दोक्ति यावत् । एवमिति प्रतिबिम्बानां बिम्बमात्रत्व जीवानामपि प्रतिबिम्बकल्पानां बिम्बभूतब्रह्ममात्रत्वादित्यर्थः । अद्वयस्य बहुवचनभाक्त्वमयुक्तमित्याशङ्क्याह । धर्म्मा इतीति । उत्तरार्द्धं योजयति । एवमेवेति । विज्ञानं विज्ञप्तिरूपं ब्रह्मेत्यर्थः । यथोक्तज्ञाने मुमुक्षूनधिकारिणो व्यपदिशति । त्यक्तेति । उक्तज्ञानवतां संसारपतनाभावे प्रमाणमाह । तत्रेति ॥४६॥

ऋजुवक्रादिकाभासमलातस्पन्दितं यथा ।
ग्रहणग्राहकाभासं विज्ञानस्पन्दितं तथा ॥४७॥
अस्पन्दमानमलातमनाभासमजं यथा ।
अस्पन्दमानं विज्ञानमनाभासमजं तथा ॥४८॥

---

यथोक्तं परमार्थदर्शनं प्रपञ्चयिष्यन्नाह । यथा हि लोके ऋजुवक्रादिप्रकाराभासमलातस्पन्दितमुल्काचलनं तथा ग्रहणग्राहकाभासं विषयाभासमित्यर्थः । किन्तद्विज्ञानस्पन्दितम् । स्पन्दितमिव स्पन्दितमविद्यया । न ह्यचलस्य विज्ञानस्य स्पन्दनमस्ति । अजाचलमिति ह्युक्तम् ॥४७॥

अस्पन्दमानं स्पन्दनवर्जितं तदेवालातमृज्वाद्याकारेणाजायमानम् । अनाभासमजं यथा तथाऽविद्यया स्पन्दमानमविद्योपरमे अस्पन्दमानं आत्माद्याकारेणानाभासमजमचलं भविष्यतीत्यर्थः ॥४८॥

---

विज्ञानमजमचलमेव जात्याभासमित्युक्तं तदिदानीं दृष्टान्तेन प्रपञ्चयति । ऋजुवक्रादिकेति । अध्यात्मपूर्वकप्रकाशस्य नानाकारावभासो विवर्त्तस्तद्वद्विज्ञानस्य स्पन्दितमिति श्लोकस्य तात्पर्यमाह । यथोक्तमिति । तत्र दृष्टान्तभागं व्याचष्टे । यथा हीति । दार्ष्टान्तिकं योजयति । तथेति । किमित्यविद्यामन्तरेण मुख्यमेव स्पन्दनं विज्ञानस्य नेष्यते तत्राह । न हीति । निरवयवस्य विभुनो विज्ञानस्य वस्तुतश्चलनविकल्पस्याविद्यमानमेव स्पन्दनमित्यत्र वाक्योपक्रमानुकूल्यं कथयति । अजेति ॥४७॥

विज्ञानं शान्तमित्युक्तं दृष्टान्तेन स्पष्टयति । अस्पन्दमानमिति ।

